# मीमांसाप्रकाशः

(A Short Synopsis of
Mīmāṃsā System of Thought)

Prof. Asoke Chatterjee

# MĪMĀṂSĀ PRAKĀŚÁ

ASOKE CHATTERJEE M. A. (Double)
Kāvya-Veda-Purāṇa-Smṛtitīrtha.
Head of the Department of Sanskrit, Govt. Sponsored Degree College
Narikeldanga, Calcutta.

SANSKRIT PUSTAK BHANDAR
1956.

# मीमांसाप्रकाश:

श्रीअशोक चट्टोपाध्याय एम. ए. ( डवल )
काव्यवेदपुराणस्मृतितीर्थं
प्रधान अध्यापक, संस्कृत विभाग
गभर्णमेण्ट स्पन्सर्ड डिग्री कलेज
नारिकेलडाङ्गा, कलिकाता

संस्कृत पुस्तक भाण्डार
१९५६

*To my ācārya* :

Prof. R. C. HAZRA, M. A., PH.D., D.LIT.

*this brochure is dedicated as an*
*humble token of heart-felt*
*gratitude and reverence*

# प्राक्कथनम्

भारतगौरवभूतेषु हि षट्सु दर्शनेषु जैमिनीयं मीमांसा-शास्त्रं धर्म्मनिर्णयद्वारभूतमिति सर्व्वेषां सुविदितम् । नहीदं शास्त्रं विहायान्येन केनापि प्रकारेण वेदार्थोऽवगन्तुं पार्य्यते कैश्चिदपि परतन्त्रप्रज्ञैर्विपश्चिद्भिः ; अतएवोक्तं भट्टपादैः—

धर्मे प्रमीयमाणे हि वेदेन कारणात्मना ।
इतिकर्त्तव्यताभागं मीमांसा पूरयिष्यतीति ।।

तस्य च वेदार्थविचारात्मकस्य मीमांसाशास्त्रस्य द्वादशाध्यायाः प्रमाण-भेद-शेष-प्रयुक्ति-क्रमाधिकार-सामान्याति-देश-विशेषातिदेशोह-वाध-तन्त्र-प्रसङ्गाख्या विद्यन्ते । प्रमाणादयः प्रसङ्गान्ता द्वादशपदार्थाः क्रमाद् द्वादशानामध्यायानां विषयाः । विषयगौरवान्महदिदं दर्शनं सर्वाण्येव दर्शनान्तराण्यतिशेते ।

तदेतत् सूत्रात्मकं महन्मीमांसादर्शनं शब्दतः संक्षिप्तमप्य-र्थतोऽतिगम्भीरम् । प्राचीनैरुपवर्षादिभिरस्य व्याख्यानं कृतमपि न तत्सर्वेषां सम्मतमिति मन्यमानो भगवान् शबरस्वामी सर्वादरणीयं सुप्रसन्नं चास्य भाष्यं प्रणिनाय ।

अस्य च प्रसन्नगम्भीरस्य भाष्यस्य द्वे व्याख्याप्रस्थाने प्रसिद्धे वार्त्तिकप्रस्थान-टीकाप्रस्थानरूपे । तत्र मीमांसकवर्य्यैः खण्डदेवादिभिर्वार्त्तिकप्रस्थानं प्रपञ्चितं शालिकनाथादिभिश्च टीकाप्रस्थानम् । तेन प्रकटीकृतञ्चास्य गाम्भीर्य्यं चतुर-चेतसामेव चेतसि चमत्कारमाधत्ते । अतएवास्य प्रचारोऽपि विरल एव ।

अस्य चातिगम्भीरस्य विरलप्रचारस्य शास्त्रस्य प्रचार-वाहुल्यं कामयमानेन विविधशास्त्रदर्शिना वेदस्मृतिकाव्य-पुराणतीर्थोपाधिकेन एम्.-ए. विरुदभूषितेनास्मदीयान्तेवासिना श्रीमता अशोकचट्टोपाध्यायेन सर्वेषां सुवोधाय सरलया सुरगिरा मीमांसाशास्त्रीयविषयान् कतिपयानाकलय्य "मीमांसा-प्रकाश" नामधेयोऽयं ग्रन्थः प्रकाशितः। ग्रन्थेऽस्मिन् मीमांसा-शास्त्रीयविषयाणां वहूनां संक्षिप्तालोचनं परिदृश्यते। तच्चालोचनं सरलया गिरा सिद्धान्तप्रदर्शनपरतयैव कृतमिति प्रतिभाति। तेन च मीमांसार्थः सर्वेषां सुवोधो भवेदित्ययं कामयते।

व्याख्यानेऽस्मिन् मतभेदोऽस्ति न वा, अत्रोपस्थापितं मतमादरणीयमनादरणीयं वेति शास्त्रेऽस्मिन् कृतवुद्धय एव विचारयन्तु। मन्ये यद्यपस्मिन् व्याख्याने कश्चिन्मतभेदः स्यात्, तथाप्येतन्न निष्फलम् उपेक्षणीयं वा। यदा हि महतामपिपण्डितप्रकाण्डानां सर्वतन्त्रस्वतन्त्राणां व्याख्यानं नैव सर्वादरनीयं जातं, तदा कैव कथान्येषामाधुनिकानां स्वल्पमतीनाम्। अतो वर्त्तमानसमये वङ्गदेशे विरलप्रचार-स्यास्य शास्त्रस्य प्रचारे श्रीमताम् अशोकचट्टोपाध्यायानाम् इयं प्राथमिकी प्रचेष्टा संस्कृतानुरागिणां प्रशंसनीयेति विद्वांसः सर्वेऽपि स्वीकुर्युरिति मन्यते—

कलिकाता नगर्य्याम्
सौराग्रहायणस्य
पञ्चमदिवसे

श्रीप्रवोधचन्द्र लाहिड़ी देवशर्मा
कलिकातासंस्कृतकलेजाध्यक्षः

# INTRODUCTION

The present work is an humble attempt to give a short exposition of the Pūrvamīmāṃsā system of Indian Philosophy. This particular branch of study has always been less attractive even to a serious student of Indian system of thought for the simple reason that its primary object is to give a philosophical colouring to the rites and rituals which have lost all their appeal to the modern Indian mind. This universal apathy has resulted in the emergence of erroneous and diversified notions about its doctrines. It cannot be gainsaid that Mīmāṃsā, Nyāya and Buddhism—these three systems practically form the nucleus of the hair-splitting dialetic which stands as the high watermark in the firmament of Indian Philosophy. A first-hand acquaintance with the Pūrvamīmāṃsā system is necessary before any one engages himself to a study of other systems. The present volume is written with that primary end in view. The Mīmāṃsā system is a vast subject with a large number of ramifications. It is not possible to do full justice to the whole subject within such a short compass.

The present treatise is chiefly pre-occupied with the metaphyisical and epistemological sides of the Pūrvamīmāṃsā. No brilliant exposition of its historical side has as yet been made, so we feel tempted to give here a short historical exposition of the system.

The origin of the Pūrvamīmāṃsā may be traced back to the Vedic literature. The great sage Jaiminī (4th century B. C.) is the author of the Mīmāṃsā-sūtra. The Mīmāṃsā sūtras embody a varied discussion on the rituals and seek to explain these rituals on a philosophical standpoint.

The Sūtras have been commented upon by S'abarasvāmin (1st century B. C.) and S'abara's treatise form the basis of the entire literature of this school. Kumārila, (7th century A.D.) the great champion of Brahminical thought commented on the sūtra and the Bhāṣya. His ślokavarttika is an explanatory treatise on S'abara's commentay. Maṇḍanamiśra wrote Vidhiviveka which again has been commented upon by Vācaspati Miśra (850 A. D.) in his Nyāyakanikā. A large numbers of commentaries have been written on S'lokavārttika by such emiment authors as Sucaritamiśra, Pārthasārathi Miśra and Someśvara bhaṭṭa. Pārthasārathi has also an independent treatise to his credit *viz.* S'āstradīpikā.

Tradition goes that Prabhākara the formulator of the famous Prābhākara school was the pupil of Kumārila. Dr. Ganganath Jha opines that Prabhākara preceded Kumārila. Prabhākara's Bṛhati is a commentary on the bhāṣya of S'abara. Prof. Kuppuswami Sastri upholds the traditional view on historial grounds. Dr Jha's arguments stand on external evidence, but Dr. P. Shastri in his *magnum opus* 'Introduction to Pūrvamīmāṃsā' has supplied us with internal evidence which seeks to establish that Prabhākara was anterior to Kumārila. Prabhākara is a faithful follower of S'abara while Kumārila often dissents from S'abara. S'ālikanātha is the author of Ṛjuvimalā and Prakaraṇapañcikā. Bhavanātha's Nyāyaviveka is another work of the Prābhākara school. This school has again been divided into three sub-schools :—Jaratprābhākara, Navyaprābhākara and the school led by Murāri (Murārestṛtīyaḥ panthāḥ.) Appayadīkṣita's Vidhirasāyana, Āpadevas Mīmāṃsā nyāyaprakāśa, Laugākṣibhāskara's Arthasaṃ-

graha and Khaṇḍadeva's Bhaṭṭadīpikā are well additions to the Mīmāṃsā school.

Apart from this vast literature of the traditional Mīmāṃsā we have another great exponent Bhartṛmitra, whose works have not come down to us but whose views have been vehemently criticised by the Mīmāṃsists. Kumārila in his introductory verses of the S'lokavārttika expresses a bitter feeling about his predecessors Bhartṛmitra etc. who have reduced the Mīmāṃsā to a heterodox system and Kumārila's attempt is to turn it to a orthodox line. (S'lokāvarttika śl. 10). It is a matter of discussion how far this remark of Kumārila is a proper estimation of the school led by Bhartṛmitra. It is a matter ot great felicitation that MM. Jogendranath Tarka-Vedāntatīrtha has, for the first time,made a systematic attempt in collecting the views of Bhartṛmitra as presented by the orthodox philosophers[1]. Bhartṛmitra's lost work is *Tattvaśuddhi*.

The term Mīmāṃsā means the reasoning which helps us to understand the connotation of a word or a sentence. 'Pūrva' indicates that this reasoning regarding the sacrifices forms the earlier portion (pūrva) of the Vedas. It is otherwise called Karmamīmāṃsā since it deals with the performance of sacrifice in all its details. Its chief concern is the performance of rites and such problems of philosophy as the nature of ultimate reality or of the soul find no favour with its exponents. This system strikingly lacks in presenting a philosophical view of the universe though it professes to be realistic. Inspite of all these pitfalls it must be admitted that the modern apathy to the system is surely suci-

1. Our Heritage, (Bulletin of the Department of Post graduate Training and Research, Sanskrit College, Ca.cutta) Vol. 1, Part 1, January—June 1953. pp. 103-122.

dal in view of the fact that without a study of it no knowledge of other system can be complete.

I deem it my duty to repeat here that my dicussion should not be regarded as complete. My attempt is a limited one. I shall feel satisfied if I succeed in conveying an idea of the general viewpoint of the philosopher of the school. It is for the reader to judge how far I have succeeded in my attempt though it is true that I have spared no pains in presenting their thoughts in a lucid and systematic way.

I feel myself highly gratified in dedicating this first attempt of mine to my *Ācārya* Dr. Rajendra Chandra Hazra M, A., Ph. D., D. Lit, Research Professor in Smṛti-Purāṇa, Post Graduate Research Department, Sanskrit College, Calcutta. He has always encouraged me in my persuit and has supplied me with materials whenever necessary.

Principal Dr. P. C. Lahiri M. A., Ph. D. (London) of Sanskrit College has shown much interest in spending his valuable time in seeing through the book and blessing with a foreward in his inimitable language. I accord my deepest and sincerest *praṇāmas* to him.

My debt to my dear friend Prof. Gopikamohon Bhattacharyya M. A,, Kāvya-Nyāyatīrtha has always been unestimable. Without his unhesitating co-operation this book would not have come to light within such a short period. I shall be failing in my duty if I do not accord my heart-felt thanks to him.

A. Chatterjee.

Govt. Sponsored
Degree College.
Narikeldanga, Calcutta-10

# सूचीपत्रम्


| विषयाः | पृष्ठम् |
|---|---|
| उपोद्घातः | १ |
| प्रमाणविवरणम् | २ |
| प्रामाण्यलक्षण | ३ |
| जगत्कल्याणार्थमेव भारतीयवाङ्मयस्य प्रवृत्तिः | ७ |
| तदनवाप्तावकृतार्थता जीवस्य | ९ |
| प्रमाणानामप्यचारितार्थ्यं मोक्षपर्यन्तागमने | १० |
| सम्भवैतिह्ययोः न प्रमाणत्वम् | ११ |
| धर्मविषये वेदस्यैव प्राथम्यम् | १२ |
| वेदानामपौरुषेयता | १२ |
| वेदापौरुषेयत्वे पूर्वपक्षः | १३ |
| वेदानामपौरुषेयत्व सिद्धान्तः | १४ |
| वेदानां स्वतः प्रामाण्यम् | १६ |
| वेदानन्तरं मन्वादीनां स्मृतीनां प्रामाण्यम् | १७ |
| स्मृत्यनन्तरमितिहासपुराणानि | १९ |
| वेदेऽपि विधेरेव प्राबल्यम् | २० |
| निषेधानां निवर्तकया विधितुल्यमेव प्रामाण्यम् | २१ |
| शब्दनित्यत्वमर्थनित्यत्वं च | २२ |
| मीमांसकमते कीदृशममीषां नित्यत्वम् | २३ |
| जगत्सत्यता | २५ |
| स्वर्गादिसुखमनित्यमेव | २७ |
| स्वर्गादिलोकास्तित्वविचारः | २९ |
| लोकान्तरास्तित्वस्थापनम् | ३१ |
| लोकान्तरनित्यत्वम् | ३३ |

| विषयाः | पृष्ठम् |
| --- | --- |
| मीमांसकमते मोक्षास्तित्वम् | ३५ |
| मीमांसकाभिमतमोक्षस्वरूपम् | ३६ |
| द्विविधमात्मज्ञानम् | ४१ |
| कर्मफलं क्षयिष्ण्वेव | ४४ |
| शास्त्रेषु पूर्वमीमांसैव श्रेष्ठतमा | ४५ |
| वैदिकीयं विपारशैली | ४८ |
| सर्वासु मीमांसासु पूर्वमीमांसैव प्राचीनतमा | ५२ |
| पूवमीमांसैव च सर्वव्यापिनी | ५४ |
| पूर्वमीमांसाध्ययनफलम् | ५६ |
| उपसंहारः | ६० |

---

# मीमांसा-प्रकाश:

## उपोद्घातः

इदं तावद् सर्व्ववादिसम्मतम्––यत् सर्वेप्राणिनः स्वाभ्युदये निरतिशयसुखलाभार्थञ्च प्रयतन्ते । तदर्थमितस्ततोऽनवरतं पर्यटन् वहु च परिश्राम्यन् अन्ततः स्वाभिलषितं सुखमवाप्यैव शान्ति भजतीति । सा चोन्नतिः तैस्तै र्यावत्स्वबुद्धिबलोदयं सातिशया निरतिशया वा काम्यते । यथा स्वल्पमतिर्जन्तुः तात्कालिकस्वपरिस्थितिसन्निवेशादिकमनतिक्रम्यैव ततोऽधिकं किञ्चित् कामयते । ततो यदि तत्साधनं वास्तविकं लभेत तर्हि तदनुष्ठाय, चिरादचिराद्वा फलं तदीयं प्राप्नोति । भुङ्क्ते च तत् कियन्तं चन कालं हृष्टमनाः । ततो गच्छति काले तत्राऽल्पतामसारतां च बुद्ध्वा ततोऽप्यधिकसारे फले कृतमतिः, तदर्थं यतमानः, तत् साधनमन्विष्य, तद्यथावदनुष्ठाय, तदपि कालेन लभते । भुङ्क्ते च तत् सहर्षं कंचित् कालम् । एवमेकस्मिन्नेव, द्वयोः, बहुषु वा जन्मसु, कर्माणि कुर्वाणः, फलानि तदीयानि भुञ्जानः, कालेन तत्र सञ्जातालंबुद्धिः, ततोऽप्यधिके, ततोऽप्यधिके, इति यावन्निरतिशयं फलं धावति । तस्य च स्वरूपं लोकतः

शास्त्रतो वा समधिगच्छति। तत्र स्वयं यदि समर्थः, तदा स्वयमेव प्रमाणान्यन्वेष्टुं प्रवर्तते।

## प्रमाणविवरणम्

येन वस्तुनो याथार्थ्यमवगन्तुं शक्यते तत् प्रमाणमित्युच्यते। प्रमीयते यथावदवबुध्यते वस्तुस्वरूपं येन तत् प्रमाणमित्युच्यते। प्रमीयतेऽनेनेति प्रमाणमिति प्रमाणपदव्युत्पत्तिः। मितिरत्र ज्ञानम्। एवं च येन यत् ज्ञायते तत् तत्र प्रमाणमिति सिद्धं भवति। यथा स्वसन्निहिते भूतले घटं पश्यति पुरुषः स्वचक्षुषा। ततस्तत्र घटसत्तामवगच्छति। अर्थात् भूतलेऽत्र घटोऽस्ति इति जानाति। अतोऽत्र घटसत्तायां प्रत्यक्षं प्रमाणमित्युच्यते। अक्ष्णः चक्षुषः प्रति पुरतः 'प्रत्यक्षमिति। एवं पुरतो वृत्तिवस्तुमात्रग्राहकं प्रत्यक्षमित्युच्यते। प्रमा नाम निश्चयात्मकं ज्ञानम्। तज्जनकत्वात् प्रमाणमिति च व्यपदिश्यते। तच्च चक्षुः यदि काचकामलादिरोगरहितं स्वच्छं भवति, तदैव तद्वस्तुनो यथावदवबोधकं भवति। नान्यथा। अतएव दुष्टेन चक्षुषा शुक्तिकां पश्यन् तां रजतमवगच्छति। अवगच्छन् च तद्व्यवहारे यतमानो वैफल्यं भजते। उपहासास्पदं च भवति। अतो दुष्टं चक्षुर्न प्रमाणम्। किन्तु दोषरहितं स्वकार्यं यथावत् कर्तुं समर्थमेव च तत् प्रमाणम् इति प्रामाणिकाः कथयन्ति। तत्र स्वसन्निहितं वस्त्वन्तरेणाऽतिरोहितमेव पदार्थजातं चक्षुरवबोधयति। न भूतं भाविदेशान्तरस्थं वा

वस्तु तेनाऽवबोधयितुं शक्यते । अनुमानादीनां तु देशान्तर-कालान्तरव्यवहितानामप्यस्ति वस्तूनामधिगमने सामर्थ्यम् । परं प्रत्यक्षमुपजीव्यैव तेषां प्रवृत्तिः न स्वातन्त्र्येण । यथा धूमेन वह्न्यनुमानं क्रियते तत्र धूमं चक्षुषा पश्यन् वह्निं चाऽपश्यन्, तत्र बहुशः पूर्वदृष्टं वह्निधुमयोः साहचर्यं स्मरन् तच्चाऽत्रातिदिशन् ततो वह्निसत्तामत्रापि निश्चिनोति । एवं येन पूर्वं बहुवारं प्रत्यक्षतो धूमाग्न्योरेकत्रस्थितिः (धूमस्थले वह्निसत्वम्) अवलोकिता, स एव पर्वते धूममात्र-दर्शनेन वह्निमनुमातुं शक्नुयादिति अनुमानप्रमाणस्य प्रत्यक्ष-पूर्वकत्वं स्पष्टमेव । एवमेवेतरेषामपि प्रमाणानां प्रत्यक्ष-पूर्वकत्वमवगन्तव्यम् । एवं प्रत्यक्षपूर्वकत्वेऽपि तेषां प्रत्यक्षा-द्यनवगतार्थबोधकत्वमेव । अतएव च तेषां प्रामाण्यमपि ।

## प्रामाण्यलक्षणम्

प्रामाण्यलक्षणे शास्त्रकाराणां वैमत्यं दरीदृश्यते । प्रमायाः करणं प्रमाणम् । प्रमा नाम यथावस्थितवस्तु-विषयकं ज्ञानम् । यथाशुण्डलाङ्गूलदन्तपादादिविशिष्टो वृहन् मृगविशेषो हस्ती । तं तथैवावबोधयति प्रत्यक्ष-मिति तत् प्रमाणमिति नैयायिकाः । तेषां मते पूर्वदृष्ट-हस्तिविषयकस्य द्वितीयज्ञानस्याऽपि प्रामाण्यमेव । परं लक्षणमिदं मीमांसका वेदान्तिनश्च नाङ्गीकुर्वन्ति । ते हि ब्रुवते—न केवलं यथावदवगमयितृत्वमेव प्रामाण्यं भवितु मर्हति । किन्तु यथावदवगमयितृत्वे सति पूर्वमज्ञात-

विषयावबोधत्वमेव प्रामाण्यम् । तत्राऽबाधितार्थबोधकत्वमपि निवेशनीयम् । एवं च यो विषय एतज् ज्ञानोदयात् पूर्वमज्ञातः, अथ चाऽबाधितः तादृशो यथावस्थितवस्तुविषयको ज्ञानविशेष एव प्रत्यक्षपदवाच्य इति सिध्यति । एतेषां मते पूर्वदृष्टवस्तुविषयकस्य स्मरणस्य प्रामाण्यं नास्ति, नूतनतयोत्पन्नस्यैव प्रामाण्यम् । तत्राऽपि भाट्टप्राभाकरयोर्मते कियांश्चन भेदोऽस्ति । भाट्टाः प्रमाणवत् अप्रमाणमपि ज्ञानं भवितुमर्हतीति स्वीकुर्वन्ति । एवमेव नैयायिका वेदान्तिनश्च । एवं चैतेषां मते सत्यज्ञानं, मिथ्याज्ञानमिति ज्ञाने द्वैविध्यमस्ति । प्राभाकरमते तु सर्वं सत्यज्ञानमेव । मिथ्याज्ञानमिति न किमप्यस्ति । परं तन्मते यस्य मिथ्याज्ञानमिति व्यवहारः, तस्येयं प्रक्रिया—यत्र शुक्तिकां दृष्ट्वा इदं रजतम्, इति बुद्धिरुदेति, तत्र पुरोऽवस्थितां शुक्तिकां चक्षुर्भ्यां पश्यति, तत्र च यत् चाकचक्यादिकमस्ति, तस्य सादृश्यात् आपणस्थं रजतं स्मृतिपथमानीयते । स्मृतेन रजतेन सह शुक्तिकाया दृष्टाया अभेदमध्यवस्यति । एवमध्यवस्यन् इदं रजतम् इति निश्चिनोति । एवं चाऽत्र शुक्तिविषये प्रत्यक्षम्, रजतविषये स्मरणम्, इति ज्ञानद्वयमिदं यथार्थमेव, न मिथ्याभूतम् । तथाऽपि मनोदोषात् तयोः ज्ञानयो र्द्वित्वमजानन्[1] द्वे अपि ते ज्ञाने

---

1. See प्रकरणपञ्चिका P. 43, "इदं रजतमिति नैकं ज्ञानम्, किन्तु द्वे एते विज्ञाने"

एकीकृत्य व्यवहरति इदं रजतमिति । अतश्चात्र प्रत्यक्षात्मकस्य पुरोवर्तिशुक्तिविषयकस्य ज्ञानस्य स्मरणात्मकस्य चाऽऽपणस्थरजतविषयकस्य परस्परं भिन्नस्य भेदं मनोमालिन्यादगृहीत्वा एकं तद् ज्ञानमित्यध्यवस्यन् तथैव व्यवहरति । वस्तुतस्तु तदुभयमपि सत्यरूपमेव । तद्गतभेदाग्रहनिबन्धनरूप एव तु भ्रम इति । अतः प्रभाकरमते सर्वं ज्ञानं सत्यमेवेतिफलितम् । उक्तं हि शालिकनाथेन——

"यथार्थं सर्वमेवेह विज्ञानमिति सिद्धये ।
प्रभाकरगुरोर्भावः समीचीनः प्रकाश्यते"[1] ।। इति ।।

वेदान्तेऽपि श्रीमद्रामादुजाचार्यैरेवमेवोररीकृतम्——"यथार्थं सर्वविज्ञानमिति वेदविदां मतम्"[2] इत्यादिना । अस्तु ।

एवं प्रत्यक्षानुमानादीनां सत्यपि प्रामाण्ये न तान्यलौकिकेऽर्थे प्रवर्तितुमीशते । अलौकिनाऽर्थेन सह सम्बन्धस्य ग्रहीतुमशक्यत्वात् । सम्बन्धग्रहणमन्तरा प्रमाणस्य प्रवर्तितुमसामर्थ्यात् । यद्यपि लोके तावदुच्चावचा चेतनाचेनयोस्सृष्टिर्दरीदृश्यते तत्राऽवश्यं केनचन कारणेन भवितव्यम् । अन्यथा सृष्टेराकस्मिकत्वे किं कुत्र कदा भवति इति निश्चेतुमशक्यत्वेन सर्वस्यैव जगतो विप्लवापातात् । अतो जगद्वैचित्र्यरूपादर्थापत्तिप्रमाणात् अवश्य-

1. प्रकरणपञ्चिका. नयवी. १. श्लो.

2. श्रीभाष्य. १. १. १. p. 183. N. S. edn. also A. B. Keith, Karmamīmāṃsā p. 19.

मस्ति किञ्चित् कारणमित्यभ्युहितुं शक्यते, परंतु किं कारणं कस्येति विशिष्य निर्द्धारयितुमशक्यत्वात्, निश्चयज्ञानं विना कुत्रापि प्रवृत्तेरनुदयात्, सदपि तदर्थापत्तिप्रमाणं न फलाय कल्पत इति सिध्यति। अतः परिशेषात् शब्दस्यैव प्रामाण्यं भवितुमर्हतीत्यध्यवसीयते। तदपि न लौकिकस्य शब्दस्य। तथा हि—शब्दो द्विविधो-ध्वन्यात्मको वर्णात्मकश्च। तत्र केवलध्वन्यात्मकस्याऽर्थाभावात् तस्य प्रमाजनकत्वरूपं प्रामाण्यं न भवितुमर्हति। वर्णात्मकोऽपि शब्दो द्विविधो—वैदिको लौकिकश्चेति। ऋग्वेदादिमूलभूताः शब्दा वैदिकाः। लोकव्यवहारसाधनीभूतास्तेषु तेषु कालेषु तैस्तैः व्यासवाल्मीकिप्रभृतिभिः प्रत्नैरद्यतनैश्च ग्रान्थिकैः व्याख्यातृभिः स्वस्वाभिलषितमर्थं प्रकाशयितुं तदावेदकानामक्षरपदवाक्यादिरूपेण स्वैरेव रचयित्वा बहिः प्रयुज्यमाना श्शब्दा लौकिकाः। तत्राऽपि लौकिकानां शब्दानामलौकिकेनाऽर्थेन सह सम्बन्धज्ञानाभावात् लौकिकैः शब्दैः पुरुषबुद्धिसंघटितैः नाऽलौकिकोऽर्थोऽवबोधयितुं शक्यत इत्यवशिष्टा वैदिका एव शब्दा धर्मे प्रमाणत्वेनाध्यवसीयन्ते। अतो वेद एवेतरप्रमाणनिरपक्षतया (स्वातन्त्रेण) धर्मे प्रमाणम्। स्मृतयस्तु मनुयाज्ञवल्क्यपराशरादिभिः महर्षिभिः प्रणीता वेदमुपजीव्यैव प्रमाणीभवन्ति। तथाहि स्मृतयो नाम स्मरणरूपाः। स्मरणं नाम पूर्वं प्रत्यक्षेणाऽवगतस्य पुनर्मनसाऽनुसन्धानमात्रम्। यथा पूर्वेद्युः कस्मिंश्चित् स्थले प्रत्यक्षेण

दृष्टस्य वस्तुनः, अद्य तत्सान्निध्याभावेन मनसैवाऽनुसन्धानम्। एवं च मन्वादयो महर्षयोऽधीतसकलवेदाः, ततएव तत्तद्धर्मस्वरूपं यथावद्बुध्वा, तद्धृदये स्वीकुर्वाणाः, कालान्तरे तत् यथावत् स्मरन्ति। स्मृतं चाऽर्थं तत्कालवर्तिपुरुषवुद्ध्यनुगुणं स्वपदैः संगृह्य ग्रन्थात्मना बहिः प्रकाशयन्ति। त एव ग्रन्थाःस्मृतय इत्युच्यन्ते। वेदार्थस्मरणरूपत्वादेतेषां स्मृतिशब्देन व्यवहारः। अतो मन्बादिभिः योऽर्थः स्वग्रन्थेषु प्रतिपादितः सर्वोऽपि वेदादेवोद्धृतो न मनागपि स्वकपोलकल्पित इत्यास्तिकानां निर्णयः। मनुरपि च तथैव स्वग्रन्थे वदति–

यः कश्चित् कस्यचिद्धर्मो मनुना परिकीर्तितः।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः। (मनुः २।७)

एवं याज्ञवल्क्यप्रभृतयोऽपि महर्षयः, अन्ये च स्मृतिकारास्स्वग्रन्थस्य श्रुतिमूलकत्वकथनं विना न पर्यवस्यन्ति। अतो यश्च यावान् भारतीयो धर्मग्रन्थः स सर्वोऽपि प्राचीनै रर्वाचीनैश्च प्रणीतो वेदमूलक एव। वेदोक्तमेवाऽर्थं स्वग्रन्थेषु गद्यात्मकैः पद्यात्मकैर्वा वचनजातैः संजगृहु र्धर्मैकत्यनमतयो महर्षयो लोकानुग्रहैकपरायणा इति भारतीयामास्तिकजनानां परमोऽयमभेद्यस्सिद्धान्तः।

## जगत्कल्याणार्थमेव भारतीयवाङ्मयस्य प्रवृत्तिः।

एवं च लोककल्याणार्थं प्रवृत्ताः श्रुतिततयः तदौपयिकान् विषयान् प्रमाणान्तरागोचरान् प्रमाणान्तरनिरपेक्षतयैव

तत्तत्पुरुषबुद्धिविभवानुगुणं तत्तदधिकारिणमनुसृत्य निरूपयन्ति । तानेव च विषयानतिदुरूहानल्पमतिभिरधिगन्तुमशक्यान् सर्वज्ञकल्पा मन्वादयो महर्षयो जगत्कल्याणायैव सङ्गृह्य स्ववाक्यै स्सरलया शैल्या स्वग्रन्थारूढान् कृत्वा प्रकाशयन्ति । तत्राऽप्यवगाढुमसमर्थान् मन्दमतीनभिवीक्ष्य व्यासादयो महनीयतमा मुनयस्ततोऽपि सरलतमया रीत्या तानेव च विषयान् हृदयंगमाभिः कथाभिरितिहासादिभिश्च संयोज्य लोके प्रकाशं प्रापयन्ति प्राणिहितायैव । एवं श्रुतीनां स्मृतीनां पुराणानां चोद्देश्यमेकमेव । विषयोऽप्येक एव । उपपादनरीतौ परं विनेयबुध्यनुसारेण कठिनता सरलता, समास, व्यास, सेतिहासत्व निरितिहासत्वादिना भेददर्शनम् । प्राणिमात्रसमुद्धारणमेव श्रुत्यादीनां प्रवृत्तौ मुख्यमुद्देश्यम् । तदनुयायिनां स्मृतिपुराणादीनामपि च तदेव कार्यम् । तदानीमेव तेषां प्रवृत्तौ साफल्यम् । (प्रयोजनवत्ता) अन्यथा केवलकथामात्रनिरूपणे पिकदशनकाकदशनपरीक्षावत् तेषां प्रयासो निरर्थकस्स्यात् । प्रेक्षावन्तो हि निष्फले कार्ये न कदाऽपि प्रवर्तेरन्, अल्पफलके वा व्यापारे । अतो भारतदेशे यावन्ति वाङ्मयानि वेदरूपाणि प्राचीनतमानि, स्मृतिरूपाणि ततोऽर्वाञ्चि, इतिहासपुराणरूपाणि च ततोऽप्यर्वाञ्चि किं बहुना प्रत्यक्षफलैकनिरूपणीयानि आयुर्वेदधनुर्वेदगान्धर्ववेदादीनि, सर्वेषां तेषां लोकहितार्थमेव प्रवृत्तिः ।

## तदनयाप्तावकृतार्थता जीवस्य

एवं चेहलोके लब्धजनिर्जीवो यदि स्वकल्याणैकप्रयोजनानि वैदिकानि व्यासवाल्मीकिप्रभृतीनां महर्षीणां वा वचनानि नोपादत्ते, न वा तान्यनुसरति तदा धिगेव तस्य जीवनमुत्पत्तिं वा भुवि। यदि स स्वकल्याणमभिवाञ्छन्नपि यथायथं तत्साधनं तत्प्रतिबोधकानि प्रमाणानि वा नोपाददीत, कथं तर्हि स्वाभिलषितमवाप्नुयात् फलम्। कथं वा तस्य निस्तारस्स्यात्? अतस्ते क्रिमिसदृशाः पुनः पुनरुत्पत्तिं विनाशं च निरवधि प्राप्नुवानाः च कदाचिदप्यात्मानमुद्धारयेयुः। यथोक्तं श्रुतावेव—"मृत्वा पुनर्मृत्युमापद्यन्ते। अद्यमानास्स्वकर्मभिः। आशातिगाः क्रिमय इव"[1] इत्यादि। "इह चेदवेददिथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः"[2] इत्युपनिषदि च। यतो हि जनिषु मानुष्यं जन्म सुदुर्लभम्, तत्रापि विशिष्टज्ञानता, युक्तायुक्तविवेकः, साधनसामग्रीपौष्कल्यम्, दृढचित्तता, इन्द्रियाद्यवशंवदता, इत्यादीनि सर्वथा दुर्लभानि। प्राप्याऽपि सर्वाणीमानि सामग्रीसमवधानानि, यद्यवश्यप्राप्तव्यं सातिशयं स्वर्गादिसुखं, निरतिशयं वाऽऽत्यन्तिकमुक्तिरूपमानन्दैकरसरूपं वाऽपवर्गं नाऽवाप्तुं यतेत सर्वैरपि प्रयत्नैरात्मीयैः, तर्हि किमनेन कृतं जीवेन

---

1. तै. आ. १. ८. १२.

2. केनोप. २. १३. See Also. कठोप. २. ३. ४. इहचेदशकत्

यत् प्राणिमात्रसाधारणैराहारनिद्राभयमैथुनरूपैः व्यापारैरात्मानं कदर्थयता, तत्रैवात्मनो जन्मसमग्रं व्ययितवता ।

## प्रमाणानामप्यचारितार्थ्यं मोक्षपर्यन्तागमने

एवं प्रत्यक्षादीनां प्रमाणानामपि वस्तुयाथात्म्यप्रतिबोधने प्रवृत्तानां यदि न मोक्षपर्यन्तानुधावनं स्यात् तर्हि तेषां वैयर्थ्यमेव स्यात् । न हि क्षयिष्णुनि अल्पसुखे कश्चित् रज्येत । यद्यपि असमीक्ष्यकारिणोऽल्पज्ञा अनवरतं दुःखैकभाजनानि केचित् कदाचित् सुखमात्रेऽपि संतृप्येयुः ; तथाऽपि ते तत्रैव सुचिरमवस्थातुं प्रभवन्ति, तेनैव च चिरतृप्ता वा भवेयुः । अतो निरवधिक एव सुखे प्रेक्षावतां विचारशीलानां प्रवृत्तिर्भवितुमर्हतीति तावत्पर्यन्तागमनं प्रमाणानामुचितमावश्यकं चेत्येव विभाव्यते ।

परमेवं न विचारणीयं सर्वेषां प्रमाणानां साक्षादेव तावत्पर्यन्तं गमनं भवतीति । यतस्तानि बहूनि तत्कालमात्रावस्थायीनि परोक्षाण्यपरोक्षाणि वस्तूनि प्रकाश्य तावतैव चरितार्थानि भवन्ति, किन्तु जन्मनस्साफल्यं वाञ्छन् संप्रेक्षकारी बुधजनः, तात्कालिके वस्तुमात्रविभावनेऽपरितुष्यन्, नित्यफलप्रतिपादनपर्यन्तं तान्यनुकर्षन् साक्षात् परम्परया वा तत्रैव साफल्यं भजन् तत्रैव विश्राम्यति । अतएव

"न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनः ।
न विद्मो न विजानीमो यथैतदनुशिष्यात्"

इत्यादि वचनजातश्चक्षुरादीनां साक्षात् ब्रह्मदर्शने स्वर्गाद्यवलोकने वा सामर्थ्याभावप्रतिपादनेऽपि "अथ परा यया तदक्षरमधिगम्यते" इत्यादिश्रुत्या अक्षरात्मक-परब्रह्माधिगमने या बुद्धिरूपयुज्यते तदुपकारकतया प्रत्यक्षा-दीनां साफल्यमित्येव स्वीकर्तव्यम् । तत्र भाट्टा (मीमांसकाः) प्रत्यक्षानुमानशब्दोपमानार्थापत्त्यनुपलब्ध्या-ख्यानि षट् प्रमाणानि स्वीकुर्वते । प्राभाकरास्तु अनुपलब्धेः पृथक् प्रामाण्यमस्वीकुर्वन्तः पञ्चैव प्रमाणान्यभ्युपगच्छन्ति । तत्राऽपि लौकिकशब्दस्य न पृथक् प्रामाण्यं स्वीकुर्वते । किन्तु लौकिकाः शब्दाः श्रुतिविषयंगताः वक्तुरभिप्रायानु-माने साधनभावमाप्नुवन्तीति तेऽनुमानविधयैव प्रामाण्यम-श्नुवते । वैदिकास्तु शब्दा प्रमाणान्तराविषयीभूतमेवाऽ-लौकिकमर्थमावेदयन्तीति ते प्रमाणतया स्वीक्रियन्ते । अतएव ते न शब्दत्वेन शब्दस्य प्रामाण्यमभ्युपगच्छन्ति । किन्तु शास्त्रत्वेन । अतएव प्रमाणपरिगणनायां—प्रत्यक्षम्, अनुमानम्, शास्त्रम्, उपमानम्, अर्थापत्तिः, इत्येव परिगणनं क्रियते तैः ।अतः प्राभाकरमते वेदस्य तदनुयायिशास्त्रस्यैव प्रामाण्यं न शब्दमात्रस्य ।

## सम्भवैतिह्ययोः न प्रमाणत्वम्

सम्भवस्य, ऐतिह्यस्य च पौराणिका अन्ये च केचन प्रामाण्यं स्वीकुर्वन्ति । तत्र सम्भवो नाम शतसंख्यायां विंशति-संख्यायास्सत्त्वम् । तत्र महासंख्यायामल्पसंख्या सत्त्वमनु-

मानेनैव साधयितुं शक्यत इति न तत्पृथक् प्रमाणं भवितु-मीष्टे । एवं ऐतिह्यमपि परम्पराप्राप्तकिंवदन्तीमूलिका-ख्यायिकामुपजीव्य प्रवृत्तं न प्रमाणपदवीमारोढ़ुमीष्टे । यथा इह वटे पिशाचा वसन्तीति । तत्सत्यत्वे न किमप्यवष्टम्भकं पश्यामः ।

## धर्मविषये वेदस्यैव प्राथम्यम्

प्रमाणेष्वेषु धर्मविषये वेदस्यैव प्रथमप्रमाणतया परिगणनं कुर्वते सर्वेऽपि प्रमाणपथानुयायिन आस्तिकास्तीर्थंकारा इत्यत्र नास्ति संशयलेशः । वेदो नाम कालाकाशादिवत् स्वतस्सिद्धः अलौकिक श्शब्दराशिः । न तत्र पुरुषबुद्धे-स्सम्बन्धोऽस्ति ।

## वेदानामपौरुषेयता

यथाहि कालाकाशादीनां नैयायिकादिमते नोत्पादनक्रिया-विषयता अतएवेश्वरस्याऽपि न तत्र कर्तृत्वं स्वीक्रियते, नित्य-सिद्धत्वात्तेषां वस्तूनाम्, एवमेव वेदराशिरपि कश्चनाऽकृत्रि-मोऽनादिश्शब्दात्मा । ईश्वरस्यापि तत्राऽस्वातन्त्र्यमेव । किमुताऽन्येषां देवानां वा मनुष्याणाम्[1] ? ईश्वरवदेव सोऽपि सनातनो नित्यः । तत्र मात्रयाऽप्यन्यथाभूतया न

---

1. See प्र. पं. P. 98. L. 12. पुरुषकृतत्वं तावद्वेदानां भारता-दिवन्न स्मर्यते ।

भाव्यम् । या चेयमानुपूर्वी पठ्यत इदानीमस्माभिः सा पूर्वपूर्वानुपूर्वीमनुसृत्यैव । न तत्र मनागप्यन्यथा भावः पूर्वापेक्षया । तत्र सृष्टिप्रलयावनभ्युपगच्छतां मीमांसकानां मते, सर्वथा नित्यतुल्येयमानुपूर्वी वर्तमाना श्रूयते न कदाचिदप्यस्या आत्यन्तिकतिरोधानम्, यतः क्वचिद्देशे कैश्चिदवश्यपठ्यमाना एव स्यात् । सृष्टिप्रलयावभ्युपगच्छतां मते प्रलयकाले नित्यः परमात्मा वेदराशिमात्मन्यन्तर्भाव्य तिष्ठति यावत्प्रलयम् । ततस्सृष्टिसमये पुनस्तमाविर्भावयति पूर्वसर्गसमानानुपूर्वीकमेव तम् । अतो नास्ति कदाचिदप्यस्य वेदाख्यस्य शब्दराशेरात्यन्तिकोऽभावः ।

## वेदापौरुषेयत्वे पूर्वपक्षः

इदमत्र विचारणीयमस्ति–वेदो नाम महान् शब्दराशिः-कश्चनाऽक्षरसमूहात्मकः । स कयाचन विजातीययाऽऽनुपूर्व्या युक्तः । अक्षरेषु च क्रमेणोच्चरितेषु तत्राऽऽनुपूर्व्युदेति । एवं च तत्तत्पुरुषीयकण्ठताल्वाद्यभिघातविशेषेण बहिः प्राप्तप्रकाशो वेदाख्योऽक्षरसमुदायरुपः पुरुषविशेषै रेवोच्चरितोऽपौरुषेय इति कथं वक्तुं शक्यते ? नहि वयमक्षरराशिं पुरुषविशेषमुखादुत्पत्तिमन्तरा स्वत एव सिद्धमितस्तत उपलभ्यमानं कुत्राऽपि पश्यामः । यदि यंच कञ्चन पश्यामः, तं सर्वं पुरुषैरेव तत्तदर्थानुसन्धानपूर्वकम् अनुसंहितार्थस्य बहिराविष्करणाय शब्दसन्दर्भं कञ्चन गुम्फित्वा वहिरुच्चार्यमाणमेव पश्यामः ।

किञ्च ऋग्वेदादिषु सर्वत्र तानि तानि ऋषीणां नामधेयानि शतशः श्रूयन्ते। तत्र च तेषां कर्त्तृत्वमन्तरा तन्नामश्रवणं कथमुपपद्यताम्। ऋग्वेदानुक्रमण्यादयोऽतिप्राचीनाश्चाऽर्वाचीनाश्च ग्रन्थास्तत्तत्सूक्तमन्त्रादिसम्बन्धितया तत्तदृषीणां नामधेयानि श्रावयन्ति। तेषां तदृषित्वं तत्तन्मन्त्रकर्तृत्वमेव भवितुमर्हति। अन्यथा शब्दात्मकेन ग्रन्थसमुदायेन को वाऽन्यस्सम्बन्ध ऋषीणां भवितुमर्हति। अतो मन्यामहे ऋषय एवाऽतिप्राचीनास्तत्तन्मन्त्रकर्तारः। अतएव ऋषयो मन्त्रद्रष्टारः इत्यपि वचन सङ्गतं भवति। मन्त्रद्रष्टारः मन्त्रकर्तार इत्यर्थः। एव च प्राचीनैर्महर्षिभिस्तं तमर्थं वुध्वा तदावेदनाय वेदाः प्रणीताः। त एव प्रथन्त इदानीमृग्वेदयजुर्वेदादिरूपेणेति कथमेषामपौरूषेयतेति।

## वेदानामपौरूषेयत्वसिद्धान्तः

अत्र वदामः—अनादि कालादारभ्याऽत्र भारते देशे वेदानामध्ययनाध्यापनादिकमविच्छेदरूपेण प्रचलति। मध्ये मध्ये कालदोषात, समुचितसंपोषणविरहात्, विरुद्धमतप्रचारप्राचुर्यवशात्, अन्यस्माद्वाऽनिर्ज्ञातिकारणवशात् कदाचित् क्वचित् ह्रासमुपयुषी परम्परेयं परिदृश्येताऽपि परमात्यन्तिकलोपस्तु नैवाऽभवत्। महान्तमवर्णनीयं कृच्छकलापमनुभवन्नप्ययं वैदिकसमाजः कृच्छ्रेण परिपालयन्नेवाऽद्ययावदास्ते वेदकलापमिति बहुत्राऽवलोकयामो वयम्। तत्राऽपि पूर्वंपूर्वंगुर्वध्ययनपरम्परामनुसृत्यैवाद्याऽप्यध्ययन-परिपाटी

प्रचलति । न केवलमियमेकत्रैव दृश्यते । गतवर्षे देशाटनार्थं गतवन्तो वयं दक्षिणस्य समुद्रस्य तीरे क्वचित् विप्रवराणां यायजूकानां पवित्रतमगृहगणैर्मण्डितेऽग्रहारे-पीमामेव रीतिमविच्छिन्नामध्ययनाध्यापनपरम्परामक्ष्णोर्विषयीकृत्य श्रीरामचन्द्रधनुष्टङ्कारविजृम्भणविह्वल भीत-भीतातिसङ्कुचन्नह्लीभूतनिष्कल्लोलमहोदधाविवाऽऽनन्दोदधावपि निमग्ना अभूम । एवमियं रीतिस्सर्वत्र भारतदेशे समानतया परिदृश्यमाना कदाऽऽरब्धा ? केन वा प्रवर्तिता ? कथं वा प्रवर्तिता ? किमर्थं प्रवर्तिता ? इति विशेषान्वेषणाय प्रयतमाना वयं बहुदूरं गत्वाऽपि किमपि कामपि सुदृढं साधनं प्रबलतरां यक्तिं वाऽनधिगच्छन्तो वयं श्रास्यन्त एवाऽन्ते जोषं भावमेव शरणमाश्रयाम इति विद्वज्जनमात्रसिद्धमिदं नापलपितुमीश्महे । अत परम्पपराया अस्या आदिभूतं मूलमन्वेष्टुं प्रवृत्ता जैमिनिव्यासप्रभृतयो महर्षयोऽपि कृच्छ्रेणाऽपि मूलमुपलब्धुमनीशाना "अनादिरेषा परम्परा"इत्येवान्ततस्स्वीचक्रुः । "वेदस्याऽध्ययनं सर्वं गुर्वध्ययनपूर्वकम्" इति कुमारिलभट्टाः । न कोऽपि वेदस्य कर्तारमिदंतया जानन्ति । किन्तु स्वाभिमतं कर्तारं तत्र निक्षिपन्ति इति पार्थसारथि मिश्रः । एवं बहु परिश्रम्याऽपि यत्र कर्ता नोपलब्धुं शक्यते तत्र स्वमनीषामात्रेण सामान्यानुमानेन वा सकर्तृकत्वस्थापनमतिसाहसमित्येव पूर्वेषामाशयः । यत्र चर्षीणां नामानि तत्तदार्षेयतया श्राव्यन्ते, तत् सर्वमर्वाचीनैः कल्पितमेव । न तु

वेदेनैव साकं तन्नाम्नां स्मरणम् । अथवा क्वचित् दृश्येतापि । तावन्मात्रेण मन्त्रस्य तस्य तत्कृतत्वं साधयितुं शक्यते । तस्यैव मन्त्रस्याऽन्यत्र वेदेऽन्यसम्बन्धश्रवणात् । नह्येक एव मन्त्रो बहुभिरेकयैवाऽन्यूनानतिरिक्तयाऽऽनपूर्व्या निर्मातुं शक्यते । अत ऋष्यादिकल्पनमिदमर्वाक्कालिकं व्यभिचरत् न प्रमाणपथमारोढुं प्रभवति । कदाचित् सम्भवदपि वेदानां सकर्तृत्वम् । परं सुदृढमन्तरा प्रमाणावष्टम्भं न वयं कञ्चन कल्पयितुमीश्महे कर्तारम् । अतोऽचिन्त्यकालादस्मर्यमाणकर्तृका इमे वेदा अपौरुषयत्वान्नातिदूरं गच्छन्ति । इत्येव तेषां व्यासजैमिनिप्रभृतीनां महर्षिवराणां हृद्गतो भावः । तमेव चानन्तरकालिका भाष्यकृतो व्याख्यातारश्च व्यक्तीचक्रुरित्येव वयं विचारयामः । अत अस्माभिस्स्मर्यमाणानामीश्वरपर्यन्तानामपि पुरुषाणां वेदेषु कर्तृतया सम्बन्धो नास्तीत्येतदेवापौरुषेयत्वं मन्यन्ते महर्षय इत्यध्यवसातुं शक्नुमो वयम् ।

## वेदानां स्वतःप्रामाण्यम्

अतएव कारणात् वेदानां प्रामाण्यविषये स्वातन्त्र्यमभिवाञ्छन्ति प्रामाणिकाः । स्वत एव प्रमाणं वेदाः । यदि च पुरुषप्रणीता वेदास्स्युः, नहि तदीयैर्दोषैरनुलिप्ता भवेयुः । पुरुषा हि प्रायेण लोभानृतभ्रान्त्यादिभिर्नैकविधैर्दोषैः कृतानुप्रवेशा इति विदितचरमेव । यदि वेदांस्ते प्रणयेरन् तर्हि

ते दोषाननेकविधान् स्वस्वरूपानुगुणं वेदेषु अन्तः प्रवेशयेयुः स्वलाभपूजाप्रतिष्ठादिकं ततोऽभिकांक्षन्तः। अतश्च ते वेदा अविश्वासभूमयो भवेयुः। न कोऽपि तत्र श्रद्दध्यात्। न च वा तदुक्तं कर्माऽनुष्ठातुमीहेत न वा तदध्ययने तदर्थ-ज्ञाने वा मनागपि यतेत। अतस्सर्वोऽपि वेदभागः प्रमाण-पदवीमनारूढ एव सन् विशीर्येत। क्रमशो लोकाद-स्माददर्शनपदवीमप्यधिगच्छेत्। अतो न कदाऽपि वेदो जनाना-मविश्वासपात्रतामापादनीय इत्यास्तिकानां महतामास्था महती। अतोऽविश्वसनीयपुरुषसम्बन्धाभावेनाऽपि विश्वास-कारणाभावात् तत्र यद्यदुक्तं तत्र सर्वत्राऽपि इतरनि-रपेक्षप्रामाण्यबुद्धिमातिष्ठन्त आस्तिकधौरेया: तदर्थानुष्ठाने निश्शङ्कं प्रवर्तेरन्। लभेरंश्च तत्तत्प्रसूतं फलमैहिकमामुष्मिकं वाऽपवर्गान्तमित्येतदर्थमेवातिष्ठते भगवान् वेदाख्योऽलौकिक-श्शब्दराशिररविन्दनाभ इवेत्याशेरते विद्वत्प्रवरा आस्माकी-नाश्शास्त्रसिद्धान्तसमिद्धमतिमन्त इत्येव विचारयामः।

## वेदानान्तरं मन्वादिस्मृतीनां प्रामाण्यम्

अतो धर्मस्वरुपावगमेन प्राथम्यं वेदस्य, प्रामाणान्तरनै-रपेक्ष्यं च। अनन्तरं तमुपजीव्य प्रवृत्तानां मन्वादिस्मृतीनां प्रामाण्यम्। मन्वादयो हि स्मृतिकर्तारः वेदोक्तं धर्मं प्रथमं यथावबुद्ध्यैव तं तथैव स्वग्रन्थेषु सङ्गृह्य सरलैर्वाक्यैर्न्य-बध्नन्निति पूर्वमुक्तम्। अतो मन्वादिस्मृतीनां धर्मविषये-

ऽस्ति प्रामाण्यम् । परं वेदादनन्तरमेव । अतएव यदि क्वचिद् मन्वादिस्मृतयोऽर्थं वेदविरुद्धमभिदधीरन् तदा तासां प्रामाण्यं नाभ्युपगन्तुं शक्यते । यतो हि मन्वादयस्सत्यवचसोऽपि मनुष्यमात्रसाधारणैः भ्रमप्रमादलोभादिभिरभिभूता भवेयुः कदाचित् । ततश्चाऽन्यथाऽपि ते धर्मस्वरुपं वक्तुमुद्युञ्जीरन्निति कथनस्याऽस्त्यवकाशः । वेदे तु तथा कल्पनाया नास्ति लेशतोऽप्यवकाशः । अतो यावन्नोपलभ्यते विरोधो वैदिकैर्वचनैः तावत् स्मृतयः प्रमाणभूताः इतिकृत्वा वेदादनन्तरकक्षां लभन्ते स्मृतयो धर्मप्रामाण्यविषये । अस्यां कोटौ सर्वेऽपि स्मृतिग्रन्थाः

"मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनाङ्गिराः ।
यमापस्तम्बसंवर्ताः कात्यायनबृहस्पती ।
पराशरव्यासशङ्खलिखिता दक्षगौतमौ ।
शातातपो वशिष्ठश्च धर्मशास्त्रप्रयोजकाः" ।

इति याज्ञवल्क्योक्ताः परिगणनामर्हन्ति । ग्रन्थाननुसृत्येमान् प्रवर्तमानानां अलोभपूजाप्रतिष्ठादिमूलानामन्येषामपि निबन्धग्रन्थानामनयैव विधया प्रामाण्यमध्यवसातुं शक्यते । तेष्वपि ये तत्तद्देशकुलाचारादिकं वेद च नाविरुद्धमुपजीव्य प्रवर्तन्ते, तेषां तन्मूलतयैव प्रमाण्यं सिध्यति । "देशकुलजात्याचारा आम्नायैरविरुद्धः प्रमाणम्" इत्यवोचन् हि बौधायनापस्तम्बप्रभृतयो महर्षयः स्वग्रन्थेषु ।

## स्मृत्यनन्तरमितिहासपुराणानि

स्मृतिग्रन्थेभ्योऽनन्तरं पुराणेतिहासादीनि प्रामाण्यमश्नुवते । तथाहि–स्मृतिषु तावत् ये विधिनिषेधा दृश्यन्ते, तेषु न कुत्राऽपि तदुपष्टम्भकतया कथेतिहासादयो निबद्धाः । केवलमाज्ञा-रूपा एव विधयो निषेधाश्च–एवं कर्तव्यम्, एवं न कर्तव्यमिति पुराणादिषु तु विधाय किञ्चिदनुष्ठेयं कर्म, नित्यमपि ततस्त-त्सन्निधावेव तदुपोद्बलकतया "अत्राऽप्युदाहरन्तीममितिहासं पुरातनम्" इत्यादिना विस्तृता सङ्कुचिता वा कथा काचित् पूर्वतनमहापुरूषानुष्ठिततया संश्राव्यते प्रायेण । तत्र "यस्मादेवं पूर्वमहापुरूषैरनुष्ठितं यस्माच्च तैस्तदनुष्ठानेन फल-मिदमेतादृशं लब्धम्, तस्मात् त्वयाऽपि तादृशं फलमभि-कांक्षता कर्तव्यमिदं कर्म" इति कथने पर्यवस्यति । एवं कथनेन यदि तादृशं फलं न कांक्ष्यते तदा तदनुष्ठानं नावश्यक-मित्यपि तत्राऽन्तर्गर्भितोऽर्थोऽनुस्यूतो वर्तते । तत् दृष्टा तत्राऽऽलस्यादिना न प्रवर्तेताऽपि । ततश्च विधिर्व्यर्थो भवेत् । तदा विधिविषयस्य विधैर्वा गौरवं न्यूनतामियात् । अतो निर्हेतुको विधिःप्रबलः सहेतुको विधिर्दुबल इत्यभिसंहित-माचार्यैः प्राचीनैरर्वाचीनैश्च । जैमिनिरप्यमुमेवार्थ-मभिव्यनक्ति पूर्वमीमांसायां प्रथमाध्यायस्य द्वितीये पादे तृतीये हेतुवन्निगदधिकरणे । अतएव कारणनिरूपणपूर्वकं धर्म-स्वरूपपोषणविवेचनादिकं कुर्वन्ति पुराणान्यपेक्ष्य, निर्हेतुकं तदुपपादयतां धर्मशास्त्रग्रन्थानां प्राबल्यमभिकांक्षितमास्तिक-

वरैः । एवं च स्मृत्युक्तान् वेदोक्तानेव च विषयाननुवदन्ति पुराणानि । तस्मादेव कारणात् क्वचित् विषये यदि स्मृतीनां पुराणानां च विरोधस्सम्पद्यते तत्र स्मृतीनामेव प्रामाण्यम्, न पुराणानामिति सिद्धं भवति ।

## वेदेऽपि विधेरेव प्राबल्यम्

वेदेऽपि विधिरर्थवादः मन्त्रा इति भागत्रयमस्ति । तत्र विधिर्नाम तत्तत्कर्मस्वरूपद्रव्यदेवतादिविधायको लिङ् लेट् लोट्तव्यप्रत्ययघटितो वाक्यसन्दर्भः । यथा 'वायव्या श्वेतमालभेत भूतिकामः' इत्यादिः । तस्य विधिवाक्यस्यैव समीपे तत्सम्बन्धतयैव श्रूयमाणः पदकदम्बोऽर्थवादः । स पूर्ववाक्यविहितस्य कर्मणो वा तदीयद्रव्यस्य वा देवताया वा, अन्यस्य तत्सम्बन्धिनो वस्तुनो स्तुतिं कुर्वन् तत्र प्राशस्त्यवुद्धिं कर्तुरुत्पाद्य, ततस्तत्र कर्मणि तं प्रवर्त्तयति अतः पृथक् वाक्यरूपेण श्रूयमाणोऽपि स विधिविहितार्थस्तावकतया विधिना सहैकवाक्यतां भजन् विधिशेषतयैव परिगण्यते । अतस्तस्य विध्येकवाक्यतयैव प्रामाण्यम्, न स्वातन्त्र्येणेति जैमिन्यादयो मीमांसकाः । अतस्स स्वप्रामाण्यसिद्धये विधिमुखनिरीक्षणं करोतीति विध्यपेक्षया स दुर्बलः । विहितस्य कर्मणोऽनुष्ठानकाले तदीयद्रव्यदेवताफलादीनां प्रकाशनायर्त्विग्भिर्यजमानेन वा समुच्चार्यमाणो वैदिकः पदसमुदायो मन्त्रः । तस्य यागसम्बन्धिद्रव्यदेवतादिस्वरूपप्रतिपादकत्वात् यागविधायकविधिशेषत्वमेवेति सोऽपि

विध्यपेक्षया न्यूनबलः । अतो विधेर्विधायकत्वात् प्रामाण्यं प्रथमं व्यवस्थाप्यते । अनन्तरमर्थवादानां विधेयार्थस्तावकत्वात् द्वितीयकक्षागतं प्रामाण्यम् । मन्त्राणामनुष्ठेयक्रियागतद्रव्यदेवताप्रकाशनेन तेषामज्ञातार्थबोधकत्वाभावेन मुख्यप्रामाण्यासम्भवेऽपि गौणप्रामाण्यमङ्गीक्रियते इति तेषां तृतीयकक्षागतं प्रामाण्यम् ।

## निषेधानां निवर्तकतया विधितुल्यमेव प्रामाण्यम्

यथा विधयः विधायकास्सन्तः प्रामाण्यं भजन्ते, एवं निषेधा निवर्तकास्सन्तो विधितुल्यतयैव प्रामाण्यमश्नुवते । एवं निषेधार्थवादा अपि विधिगतार्थवादसमानकक्षतां भजन्तः प्रामाण्यं लभन्ते । अतश्च प्रथमं विधीनां निषेधानां च । ततो विधिनिषेधार्थवादानाम् ततः परं मन्त्राणाम्, ततस्स्मृतीनाम्, ततः पुराणानाम्, ततश्शिष्टाचाराणाम्, इति क्रमशः प्रामाण्यं धर्मे । विरोधे च पूर्वं प्रबलमुत्तरोत्तरं प्रतीतिसिद्धम् । एवं वेदार्थोपबृंहणायैवामीषां प्रवृत्तिः । उपबृंहणं नाम विस्तरशो युक्तिभिः प्रमाणैश्चोपपादनम् । सन्दिग्धानामर्थानामुपपत्तिभि स्सिद्धान्ते व्यवस्थापनम् । तदेव मुख्यतयोद्दिश्य स्मृतयः पुराणानि च विस्तरशः प्रवृत्तिं प्रापितानि । किं बहुना लोकैकमूलतया प्रवृत्तानां मनीषिमनीषावाग्विभवचातुरीसमुन्मिषदुल्लेखैकमूलकानां सामाजिकमनोनुरञ्जनैकफलानां शृङ्गाररसैकसमापूरितानां काव्यनाटकादीनामपि वेदार्थोपबृंहणप्रयोजनता, मोक्षरूप-

परमपुरुषार्थसाधनतेति साधयतां कविवराणां मनः कियद्दूरं समाकृष्टमेभिः वैदिकवाङ्मयैरिति विचारयन्तु विचारचातुरीधुरीणा विबुधवराः ।

## शब्दनित्यत्वमर्थनित्यत्वं च ।

एवमखिलभुवनकल्याणनिधेर्वेदराशेर्नित्यत्वमुपपादयितुं प्रवृत्ता मीमांसकाः तद्गतगौरवबुद्ध्यतिशयेन वा याथातथ्येन वा श्रद्धापनीयजनमनस्सन्तोषणाय वा, वेदापौरुषेयत्वनिरूपणमात्रेणाऽपरितुष्यन्तः, तन्मूलभूतानां संस्कृतशब्दानां, तदर्थानां, तत्सम्बन्धानां च नित्यत्वं स्थापयन्ति । गवादयः शब्दा नित्याः, गोत्वादयस्तदर्था नित्याः । तेषां सम्बन्धो वाच्यवाचकरूपोऽपि नित्य एवेति । विस्तरश इदमुपपादितं तैः पूर्वमीमांसायामौत्पत्तिकसूत्रे (१।१।५) आकृत्यधिकरणे च च प्रथमाध्यायतृतीयपादे (१।३।१३)। सर्वे शब्दा अक्षरात्मकाः आकाशवन्नित्याः । न कदाचिदमीषां नाशो भवितुमर्हति । सदा ते सन्ति । उच्चारणेन परं तेऽभिव्यज्यन्ते । ततः पूर्वं परं चानभिव्यक्ता एव सन्ति । यथा कश्चित् घटः क्वचित् अन्धकारे स्थापितः तेनाऽऽवृतत्वादालोकाभावाच्च न प्रकाशते । परं यदा तत्र दीपोऽन्यो वा कश्चिदानीयते तदा तेन प्रकाश्यते । ततः पूर्वं परं च तत्रैव सन्नपि प्रकाशकारणाभावान्न प्रकाशमयते । तावता न ततः पूर्वं तत्राऽऽसीदिति वक्तुं शक्यते । एवमेव शब्दोऽपि । परं कालान्तरे घटस्य नाशं प्रत्यक्षेणोपलभामहे । अत-

स्सोऽनित्यो भवितुमर्हति । शब्दस्य तु न तथेति तं नित्यमेवाऽध्यवस्याम इति मीमांसकानां सिद्धान्तसरणिः ।

अर्थानामप्येवं नित्यत्वं मीमांसकाः कथयन्ति । तेषां मते न तत्तद्व्यक्तीनां शब्दार्थता । तेषां व्यक्तिविशेषाणां विनाशशालित्वात् । एकस्यां व्यक्तौ प्रयुक्तस्य शब्दस्य व्यक्त्यन्तरे प्रयोक्तुमशक्यत्वात् । अतः तत्तज्जातिरेव शब्दार्थः । यथा घटपदस्य घटत्वरूपा जातिर्वाच्या । एवं पटपदस्य पटत्वजातिरित्यादि । सैषा जातिर्न विनाशिनी । सर्वेषां मते तस्या नित्यत्वाङ्गीकारात् । अतो नित्यः शब्दः, अर्थोऽपि नित्य इति तयोर्वाच्यवाचकभावोऽपि नित्यो भवितुमर्हतीति त्रयाणाममीषां नित्यत्वमिच्छन्ति मीमांसकाः ।

## मीमांसकमते कीदृशममीषां नित्यत्वम् ?

इदमत्र विचारपथमवतरितुमीष्टे—नित्यत्वं नाम किं कीदृशं च मीमांसकमत इति । नैयायिका हि ध्वंसाप्रतियोगित्वमेव नित्यत्वमभ्युपगच्छन्ति । यस्य वस्तुनः कदापि नाशापरपर्यायो ध्वंसो न सम्भावयितुमपि शक्यते स नित्यपदार्थः । द्रव्यगुणकर्मणां या जातिः द्रव्यत्वं गुणत्वं, कर्मत्वमिति, सा सर्वदा तिष्ठत्येव न नश्यति । एते यद्यपि प्रलयमभ्युपगच्छन्ति, परं तदानीमपि न तेषां द्रव्यत्वादीनां नाशः । एवं द्रव्यत्वाद्यवान्तरजातीनां घटत्वपटत्वादीनामपि न नाशो भवितुमर्हति । ता अपि नित्या एव सत्यः क्वचिद-

वस्थिताः अनन्तरसृष्टौ घटादीनामुत्पत्तौ सत्यां तत्रैव समवयन्ति। यावत्प्रपञ्चसत्वं स्वस्वाश्रयभूतायां व्यक्तौ समवेतास्सत्यो व्यवहारयन्ति। प्रलयकाले पुनः पूर्ववदेवेति न कदाऽपि तेषामात्यन्तिको ध्वंस इति (नैयायिकाः)। मीमांसकास्तु आत्यन्तिकं प्रलयं नाऽभ्युपगच्छन्ति। 'न कदाचिदनीदृशं जगत्' इति हि तेषां सिद्धान्तः। ग्राममण्डलजनपदादीनां महोत्पातादिना कदाचित् क्वचिन्नाशः सम्भाव्येताऽपि, परं समग्रस्य भूमण्डलस्य युगपद्विनाशः, युगपच्चोत्पत्तिरिति कथनमभ्युपगमो वा न प्रमाणेन सिध्यति, न वा मनोऽनुरञ्जयति। अतश्च खण्डप्रलयः (एकदेश--विनाशः) क्वचिद्भवति। तत्रत्यानि वस्तूनि भूमिरपि खण्डशः कदाचिन्नाशमीयुः। अन्यत्र तु तदा तथैव च सा भूमिः तानि च वस्तूनि तिष्ठन्तीति तत्राऽनुरक्ता जातिर्घटत्वादिका तथैवाऽऽस्त इति सा नित्यैव। अतस्तदाश्रयभूता व्यक्तय एव कदाचित्तिष्ठन्ति क्वचिन्नश्यन्तीत्यनित्या इत्युच्यन्ते। न तद्गता जातिस्तादृशीति सा सर्वदा नित्यैवेति। अतो वाचकस्य शब्दस्य, वाच्यस्याऽर्थस्य, तयोस्सम्बन्धस्य चेति त्रयाणाममीषामुत्पत्तिविनाशाभावरूपत्वं नित्यत्वमेव। एतत्रितयगतनित्यत्वमवलम्बयैवैतदुपजीविनां वेदानामपि नित्यत्वमध्यवसातुं शक्यते। अन्यथा, अनित्यार्थावलम्बिनो वस्तुनो न कदापि नित्यत्वं सेद्धुमर्हतीति वेदा अनित्यतामेवाऽऽपद्य विशीर्येरन् प्रमाणपदवीमनारूढा एव। यदा च मूलभूता वेदा अप्रमाणानि तदा तदुप-

जीविनां सर्वेषां प्रमाणानां शास्त्रेष्वद्यप्रचलतां प्रामाणिकैश्चाऽभ्युपगतानां प्रामाण्यं दत्तजलाञ्जलि स्यादिति सर्वमिदमास्माकीनं प्रमाणजातमुच्छिन्नं स्यात्। ततस्सर्वविप्लवः स्यात्। अतो यावन्ति प्रमाणभूतानि शब्दजालानि तेषां सर्वेषां तदर्थानां, तत्सम्बन्धस्य च ध्वंसाप्रतियोगित्वं नित्यत्वं सर्वमिदं प्रमाणजातमुच्छिन्नं स्यात्। तत स्सर्वविप्लवादिकमित्याशेरत आस्माकीनाः आस्तिकाः विपश्चिदपश्चिमाः।

## जगत्सत्यता

अनेनेदमपि सिद्धं भवति—यदयं परश्चेति लोकद्वयमपि सत्यमेवेति। तत्र भूलोकोऽयं गिरिसरित्समुद्रपाषाणवनलतागुल्ममनुजमृगमशकमक्षिकासरीसृपपक्षिक्रिमिकीटादिविविधविचित्रवस्तुजातसमापूरितोऽस्माकमक्षिगोचरो विविधाभिर्ह्रासवृद्धिभिरनुदिनमनुकलं वा समालिङ्गितो विविधं चेष्टते। सत्यश्च भवति, न स्वाप्निकपदार्थवदवस्थाय कञ्चित् कालमथ विनश्यति। न वा बाधमनुभवति शुक्तिरजतवत्। न च वा पीतशङ्खज्ञानवत् कारणदोषमनुऽभावयन्नन्यथा भवति। यथा चाद्यदृष्टमनातुरेणाक्ष्णा, अकलुषितेन च मनसा घटपटादिकं कालान्तरेऽपि तैस्तथैव पश्यन्तोऽध्यवस्यामः—अयमेव पूर्वदृष्टो घटः पटः, इति। तत्र यावदयं ज्ञानप्रसरो न बाध्यते तावदत्राऽप्रमाणतां, विषयस्याऽसत्यतां वा कथं वक्तुं प्रभवामः? अतश्च सत्यमेवेदं यथापरिदृश्यमानं

जगदिति निश्चिनुमः । अत्रत्यानां स्थावरजङ्गमानां प्राणिनामशितपीतगमनासनादिव्यापारजातमपि यावद्विरोधोपलम्भं सत्यमित्येवाभ्युपगच्छामः । एवं वेदागमशास्त्रपुराणादिभिः शतशो वर्ण्यमानोऽबाधितप्रत्ययगोचरः स्वर्गादिलोकोऽप्यस्ति सत्यश्च सदा, अतिशयिततरश्च लोकादस्मादिति कृताध्यवसाया भवामः । यद्यपीदमनुमानादिदिभिरपि साधयितुं शक्यते, तथापि "यत्नेनाऽनुमितोऽप्यर्थः कुशलैरनुमातृभिः । अभियुक्ततरैरन्यैरन्यथैवानुमीयत" इति न्यायमनुसृत्य तर्काऽप्रतिष्ठानशङ्काया बिभ्यतो मीमांसक-प्रवरा विषयमिमाम्नानुयबलेनैवसिषाधयिषन्ति । अस्तु ! एवं स्वर्गादिपदार्थः श्रुत्यैकसमधिगम्यो यज्ञादिफलत्वेनाऽभ्युपगम्यमानो द्विधा स्वीक्रियते मीमांसकैः । स च सुखविशषरूपो लोकविशषरूपो वा । तस्य च लक्षणं तैरेवमुक्तम्—"यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत् सुखं स्वः पदास्पदम्" इति तत्तत्पुरुषेच्छया प्रापितं दुःखसम्बन्धलेशरहितं अविच्छन्नधारयाऽनुभूयमानं सुखमेव स्वर्गपदेनाऽभिधीयते । तस्य सुखविशेषरूपत्वे अस्मिन्नपि लोके तत् पुरूषेणाऽनुभवितुं शक्यते । लोकान्तरेऽपि च । तस्य तत्र तत्र तत्तच्छरीरावच्छेदेनाऽनुभवार्हत्वात् । देशविशेषरूपत्वे तु तस्यैतद्देशापेक्षयाभिन्नत्वात् लोकस्याऽस्य दुःखसम्मिश्रतया तदसम्मिश्रत्वाभावेन, एतद्देहपरित्यागानन्तरं तदुचितशरीरधारणेन तादृशं गत्वा तत्र तस्य सु खस्य यथावदनुभव इति

उभयस्मिन्नपि लोकस्याऽस्य परस्य वा सत्यत्वमेवाभ्यु-पगन्तव्यम् । तस्याऽसत्यत्वे तमुद्दिश्य न कश्चित् प्रेक्षावान् प्रवर्तेत ।

## स्वर्गादिसुखमनित्यमेव

परं तत् स्वर्गादिसुखं नित्यम्, अनित्यंवेत्येतद्विचारणीयम् । केचिदत्र कथयन्ति तन्नित्यमेव । यथा वेदान्तिनां मते मोक्षो नित्योऽपुनरावृत्तिरुपः । "न स पुनरावर्तते" इति सूत्रात् । "यद्गत्वा न निवर्तन्ते तद्धाम परमं मम" इतिभग-वद्गीतावचनाच्च । यथा वेदान्तिनो मोक्षस्याऽपुनरावृत्तिरूप-त्वं विना परमपुरुषार्थत्वं न सिध्यति, इति कृत्वा तस्य तादृग्रूपतां साधयन्ति, तद्वन्मीमांसका स्वर्गादेरेव परमपुरुषार्थतया तस्याऽत्यन्तिकत्वमपुनरावृत्तिरुपत्वं साधयन्ति । अतो मीमां-सकमते स्वर्गएव परमः पुरुषार्थः स च नित्यएवेति । तदेतन्न रोचयन्ते बहुविदो विचारशीलास्साधुचिन्तकाश्च । यतो हि महर्षिजैमिनिना मीमांसासूत्रकारेणैव तद्भाष्यकारेण शबरस्वा-मिनैव च स्पष्टमुक्तम् "फलस्य कर्मनिष्पत्तेस्तेषां लोकवत् परिमाणतः फलविशेषः स्यादिति"[1] 'यद्यपि विधिः तथाऽप्य-र्थवत्ता परिमाणतस्सारतोफलविशेषादिति'[2] । अयं भावः यथा लोके तत्तत्फलसाधनेषु कर्मसु कर्मणो महत्वे महत् फलम्, तस्याऽल्पत्वे फलस्याप्यल्पत्वमित्यस्ति व्यवस्था, एवं वैदि-

---

1. मी॰ सू॰ १.२.१७.
2. शाब॰ भा, on. १.२.१७; पृ. १३०. पू० सं०

केष्वपि कर्मसु  कर्मस्वरूपानुसारेणाऽस्ति फलेषु तरतमभावः। अन्यथा एकेनाऽल्पेनैव कर्मणा महतोऽपि फलस्य प्राप्तौ महति कर्मणि न कोऽपि प्रवर्तेति तेषामननुष्टानरूपं वैयर्थ्यमेव स्यादिति। एवं वार्तिककारोऽपि

"कर्मणामल्पमहतां फलानां च स्वगोचरः।
विभागः स्थानसामान्यादविशेषेऽपि चोदिते"

इति, "कर्माल्पत्वमहत्वकृतं फलभेदं दर्शयति" इति च। एवं यदा महतः कर्मणो महत् फलम्, अल्पस्य च कर्मणोऽल्पं फलमिति स्वीक्रियते तदा तस्य ध्वंसप्रतियोगित्वरूपमनित्यत्वमपि स्वीकृतं भवति। अल्पस्य कर्मणः तद्भोगान्ते नाशः महतोऽपि तद्भोगपरिसमाप्तौ तस्य नाश इति। नाशो नाम ध्वंस एव। यदि चैकमेवाग्निहोत्रजन्यं फलमविनाशि सर्वदाऽनुभूयमानं स्यात् तदा फलान्तरभोगेऽनवकाशात् तदनुभवानापत्तौ पुरुषं प्रति तद्विधायकानां विधीनामानर्थक्यमेव स्यात्। तत्तु नेष्यते कदाऽपि। अतः सर्वकर्मविधीनां सार्थक्यमाकांक्षता पुरुषेण भोगान्ते तत्तत्फलस्वरूपाणां नाश एवाभ्युपगन्तव्यो भवति। सैव च ध्वंसप्रतियोगिताऽनित्यतया स्वर्गादिसुखस्येत्यवगन्तव्यम्। अतो मीमांसकमतेऽपि तत्तत्कर्मजन्यानां तत्तत्फलानामनित्यतैवेति। सन्तु ते नित्या एव भूलोकवत्। परं तत्सम्बन्धस्तत्तत्फलावसाने नश्यति तत्फलभोक्तुः। अतस्तस्मात् स प्रच्यवते इत्येव कल्प्यते। प्रच्युतस्सन् लोकमिमं जन्मनाऽवाप्य पुनः कर्माणि करोत्युच्चावचानि,प्राप्नोति च फलं तदनुरूपाणि इति तेषां परमसिद्धान्तः।

## स्वर्गादिलोकास्तित्वविचारः

अत्र भूलोकातिरिक्तस्य कस्यचित् लोकस्याऽभ्युपगमे केचित मीमासकैकदेशिनो विवदन्ते । ते हि कथयन्ति लोकान्तरस्य कस्यचिदस्तित्वे किं प्रमाणम् ? नहि स्मृतिपुराणादीनां प्रामाण्यं भवितुमर्हति । तेषां स्वतःप्रामाण्याभावात श्रुतिमूलकत्वेनैव तेषां प्रामाण्याभ्युपगमात् । अतः पुराणादीनां प्रामाण्यसिद्ध्यर्थं तन्मूलभूताः श्रुतयः काश्चिदन्वेष्टव्याः । तत्र विधिवाक्यानि न प्रमाणभूतानि भवितुमर्हन्ति । तेषां तत्तात्कर्मस्वरूपतदीयद्रव्यादिविधावेव चारितार्थ्येन सिद्धरूपदेवतास्वरूपविधावप्रवृत्तेः । अतस्तदर्थमर्थवादाश्शरणीकरणीयाः । तेषु च यद्यपि देवतास्वरूपविग्रहादीनां निग्रहानुग्रहादीनां चास्ति प्रतिपादनमुच्चावचम् ; तथापि तेषां यागादिस्तावकतयैव चारितार्थ्यात् न स्वार्थतात्पर्यवत्ताऽभ्युपगम्यते । तथाहि तत्तद्विधयः कंचनाऽर्थं विदधति । तत्र पुरुषं प्रवर्तयितुमीहन्ते । पुरषस्तु उपेक्षालस्यादिना समाविष्टस्सन् विधिशतं दृष्ट्वाऽपि श्रुत्वाऽपि वा न सहसा विहितकर्मसु प्रवर्तते । यावत् पुरुषो न प्रवृत्तिमादधाति तावत् श्रूयमाणा अपि विधयः प्रवृत्तिजनकत्वाभावात् वैयर्थ्यमेव भजन्ति । ततः प्रयोजनाभावात असत्समाएव ते भवेयुः । अतो विधिविहितऽर्थे पुरुषाणां प्रवृत्तिसम्पादनाय, विधिविहितमर्थमर्थवादाःस्तुवन्ति । तावतैव प्रवृत्तिरुदेति । लोके कस्यचित् पुंसो गोविक्रयमनिवार्यं भवति कदाचित् । स गोविक्रेता तां गृहीत्वा, आपणं गत्वा

"गौर्मदीयेयं विक्रेया । यस्तामिमां क्रेतुमिच्छति स क्रीणातु" इत्येतावन्मात्रोक्तौ न कोऽपि तां क्रेतुमुत्सहते ; परं तु इयं गौः बहुक्षीरा, साध्वी, जीवदपत्या, दीर्घकालदोग्ध्री इत्येवं यदा स्तुतिः क्रियते तदा स्तुत्या वशीकृतः पुरुषो झटिति तत्क्रये प्रवर्तते इति लोकसिद्धम् । एवमेव वैदिकेषु कर्मसु बहुव्ययबहु-प्रयासदीर्घकालसाध्येषु कष्टात्मकेषु कर्मसु विधिमात्रश्रवणेन न कोऽपि प्रवर्तते । अतो विधयः स्वविहितेषु कर्मसु पुरुषाणां रुचिमुत्पादयितुं तद्विषयां स्तुतिमपेक्षन्ते । तां च समर्पयन्त्यर्थ-वादाः । अर्थवादसमर्पितस्तुतिश्रवणेन जनितोत्साहः पुरुषः शीघ्रं प्रवर्तते । अतोऽर्थवादानां विधेयार्थस्तवनमेवमुख्यं कार्यम् । तावता च कृतकृतया भवन्तस्ते नाऽन्यस्मिन्नर्थे प्रवर्तन्ते । एकमर्थमवबोध्य कृतार्थाश्शब्दा अर्थान्तरे न प्रवर्तेरन् । प्रथमोक्तेनैवाऽर्थेनकृतार्थत्वात् इति जैमिनीयानां सिद्धान्तो ऽर्थवादाधिकरणे साधूपपादितः । एवं च विधेयार्थस्तावकतया गतार्था अर्थवादा अर्थान्तरावबोधने कथं प्रवर्तेरन् । अन्याय्यं-चाऽनेकार्थवत्वमिति हि प्रामाणिकाः । अनश्चाऽपाततो योऽर्थोऽर्थवादश्रवणमात्रेण प्रतीयते न तत्राऽर्थवादानां वस्तु-तस्तात्पर्यमित्येव निश्चेतव्यं भवति । सति चैवं निश्चये अर्थवादतात्पर्यविषयमनारूढः, अतएव प्रमाणपदवीमन-वगाहमानोऽर्थः कथं वा स्मृतिपुराणादीनां मूलतामनुभवितुं प्रभवेत् ? ततश्च तेषां वेदमूलत्वं कथं साधयितुं शक्येत ? तदभावे कथं वोपादेयतामश्नुवीरंस्ते ? अनुपादयत्वे च कथं जनास्तत्र श्रद्दधीरन् ? इति महतीयमनर्थपरम्परा प्रसरमुपेयुषी

कथङ्कारं वारयितुं शक्यतइति । एवंच स्वशक्यार्थेऽप्रमाण-भूतानीमान्यर्थवादादिवाक्यान्यवलम्ब्य कथं स्वर्गादिलोकसत्तां तत्रदेवादीनां निवासादिकमभ्युपगन्तुमीश्महे इति ।

## लोकान्तरास्तित्व-स्थापनम् ।

अत्र कैश्चिन्मीमांसकैरेवं प्रतिविधीयते सत्यमर्थवादानां विधेयार्थस्तावकत्वेनोपात्ता वेदे । अतस्तत्रैव तेषां तात्पर्यमिति युक्तम् । तथाऽपि प्रतीयमानस्य शक्यार्थस्याऽपि विवक्षा कर्त्तव्यैव । कथमिति चेदित्थम्—अर्थवादाःस्वशक्यरूपेण कञ्चिदर्थमभिदधति । न स स्तुतिरूपः । किन्तु कर्मसम्बन्धिद्रव्यदेवतागुणादिकमधिकृत्य प्रवृत्तमितिवृत्तादिकं तत् । न तत्प्रतिपादनेन कर्मणः कश्चिदुपयोगो जायत इति कृत्वा, पुरुषप्रवृत्तिजनिकास्तुतिः काचित् तस्मात् समुद्भाव्यते । सा च नाक्षरारूपेति तत्र लक्षणाङ्गीक्रियते । लक्षणा च तदैव प्रवर्तितुमीष्टे यदा मुख्यार्थस्य वाधः प्रयोजनाभावो वा । एवं च वाधाद्यनुसन्धानपूर्वकमेव लक्षणायाः प्रवृत्तिः । वाधाद्यनुसन्धानाय च शक्यार्थज्ञानं प्रथममावश्यकम् । शब्दतो मुख्यमर्थमवगत्य तस्य केनाऽपि कारणेन प्रकृते यद्यनुपपत्तिः प्रतीयेत तदानीं तत्सम्बन्धिनः कस्यचिदर्थान्तरस्य प्रकृतोपयुक्तस्य ग्रहणं क्रियते । अतएव "शक्यसम्बन्धो लक्षणा" इति प्रामाणिकानां कथनम् । अतो लक्षणास्थलेऽपि प्रथमतः शक्यार्थस्य ज्ञानम्, ततो वाधादावुपस्थिते लक्षणास्वीकारः इत्येव परिपाटिः । एवं चार्थवादेष्वपि मुख्यार्थानुसन्धानमावश्यकं लक्षणाबीजनिर्वाहाय । अतश्च

सत्यामप्यर्थवादस्य लक्ष्य एवार्थेनिर्भरतायां शक्यार्थोऽपि यदि वाधितो न स्यात् तदा तत्परत्वमपि स्वीक्रियत एव। तदेव युक्ततमम्। अन्यथा पूर्वमीमांसायामेव वहून्यधिकरणानि वैयर्थ्यमापद्येरन्। एतच्च कुतूहलवृत्तौ वासुदेवदीक्षितैः साधूपपादितं तत एवावगन्तव्यम्[1]।

एवं चार्थवादानां स्वशक्यार्थेऽपि प्रामाण्याभ्युपगमे ततस्सिध्यन्तो देवतारूपविग्रहहविर्भोजनसन्तोषवरप्रदानादिकाः व्यापाराः तदाश्रयभूताः स्वर्गादिलोकाः तेषाममानुषाणि कर्माणि, च कथमपलपितुं शक्यन्ते।

अतएव ब्राह्मणेषु असंख्येयेषु स्थलेषु देवादीनामपि यागाद्यनुष्ठानं तज्जन्यफलप्राप्तिश्च बहुधा श्रूयते। "अग्निर्वा अकामयत, अन्नादोदेवानां स्यामिति। स एतमग्नये कृत्तिकाभ्यः पुरोडाशयष्टाकपालं निरवपत्।" "देवा वै सत्रमासत।" देवा वै

---

1. वैदिकशिरोमणयो वार्त्तिककृतस्तु सर्वेष्वर्थवादवाक्येषु अवयवार्थानतिक्रमेणैव अजहत्स्वार्थलक्षणया प्राशस्त्यपरत्वम्। and अचिन्त्यशक्तिकपरमेश्वरतत्कर्तृकसृष्टिप्रलयाद्यंगीकारात् ॥......किंच, अर्थवादानामवयवार्थपरत्वाभावे—(1) मन्त्राधिकरणस्थगुणसूत्रविरोधः ॥ (2) यववराहाधिकरणविरोधः (1.3.5) (3) त्रिवृच्चवर्ह्यधिकरणविरोधः। (1.3.6) (4) चित्राधिकरणविरोधः (1.4.3) (5) तद्यपदेशाधिकरणविरोधः (1.4.5) (6) वैश्वदेवाधिकरणविरोधः (1.4.11) (7) तत्सिध्यधिकरणजात्यधिकरणसारूप्याधिकरणप्रशंसाधिकरणवाक्यशेषाधिकरणविरोधाः (१.४.१३-१८)। अन्ये च वह्वधिकरणविरोधा अवगन्तव्याः। कुतूहलवृत्तिः, Madras edn. p. 30.

यद्यज्ञेऽकुर्वत तदसुरा अकुर्वन्" । "देवा वै यज्ञमाग्नीध्रे व्यभजन्त" इत्यादि । एवं "ते सुवर्गं लोकमायन्" सुवर्गस्य लोकस्य प्रज्ञात्यै । "अङ्गिरसो वा इत उत्तमास्सुवर्गं लोकमायन्" "ते सुवर्गं लोकमारोहन्" इत्यादीनि स्वर्गाख्यलोकान्तरप्रतिपादकानि परस्सहस्राणि तत्र तत्र वेदेषु श्रूयन्ते वचनानि । ते च लोका भूलोकापेक्षया सर्वप्रकारेण श्रेष्ठतमा इत्यपि स्वीकार्यं भवति । अन्यथा भूलोकसुखापेक्षया समे न्यूने वा सुखविशेषे कः प्रयतेत । परिश्राम्येत्, व्ययं वा सोढुमिच्छेद्धनस्य तदर्थं क्रियमाणं महान्तमल्पीयांसं वा । न केवलमेतावदेव, तत्र तरतमभावोऽप्यवश्यमभ्युपगन्तव्यस्तत्तदुच्चावचकर्मविध्यन्यथानुपपत्त्येति च पूर्वमुपपादितम् ।

## लोकान्तरनित्यत्वम्

एतावता प्रबन्धेनेदमत्र सिद्धं भवति निर्विवादम्--अस्ति च लोकान्तरं यदत्रत्यैः प्राणिभिस्स्वस्वाधिकारमनतिक्रम्याऽनुष्ठितैः कर्मभिरवाप्तब्यं भवति[1] । तत्र पुण्यलोकः पापलोक इति

---

१. तै. आ. १.८.४. पृच्छामि त्वा परं मृत्युम् । अवमं मध्यमं चतुम् । लोकं च पुण्यपापानाम् । एतत् पृच्छामि सम्प्रति ।। अनाभोगाः परं मृत्युम् । पापास्संयन्ति सर्वदा । आभोगास्त्वेवसंयन्ति । यत्र पुण्यकृतो जनाः । ततो मध्यममायन्ति । चतुमग्निं च संप्रति ।। इति तै. आ. "एवं पृच्छामित्वा पापकृतः । यत्र यातयते यमः । त्वं नस्तब्रह्मन् प्रब्रूहि यदि वेत्था सतो गृहान्" (तै. आ. १.८.५.) ।

अत्र सायणभाष्यपरः ।

अत्र कश्चिन्मुनिः जिज्ञासुरभिज्ञमन्यं मुनिं पृच्छति--हे अभिज्ञ

विभागोऽस्ति। पुण्यकृतश्च पुण्यलोकं प्राप्नुवन्ति, पापकृतश्च

---

मुने परः, अवमः, मध्यमः, चतुर्थश्चेति चत्वारो मृत्यवः प्रसिद्धाः तेषां स्वरूपमहं त्वां पृच्छामि। एवं पुण्यकृतां पापिनां च लोकं ब्रूहि इति। एवं पृष्टस्तद्विद्वान् मुनिरूत्तरयति—

योऽसावादित्यः स एव परो मृत्युः, "योऽसौ तपन्नुदेति, स सर्वेषां भूतानां प्राणानादायोदेति" श्रवणात्, निमेषादिकालोत्पादनद्वारा आयुषो ग्रहणात्। ततो योऽसौ वायुः स मध्यमो मृत्युः। उच्छ्वासादिसम्पादनेन क्षयोपादनात्। अग्निर्जाठराख्यस्तृतीयो मृत्युः। मन्दाग्नेर्मरणसम्भवात्। चन्द्रमाश्चतुर्थः। ओषधीनामभावे भोज्यालाभेन मरणप्राप्तेः। "तत्र ये तावद् पापमेवाऽऽचरन्ति तं सुखलेशेनाऽपि हीनाः क्रिमिकीटपतङ्गादयः प्राणिनः ते पुनः पुनर्जायन्ते म्रियन्ते च कतिपयैरेवादित्यपरिस्पन्दैः। एकस्मिन् दिनेऽपि बहुधा जायन्ते म्रियन्ते पुनश्च जायन्ते। ये तु श्रुतिस्मृत्युदितमार्गवर्तिनः ते सर्वभोगयुक्तास्सन्तस्तादृशं स्थानं प्राप्नुवन्ति यत्र पुण्यकृतो जना देवा एव निवसन्ति। तदपेक्षया भिन्नाः पुण्यपापमिश्राः ते मनुष्यजन्मनि मध्यमावमचतुर्थमृत्यून् प्राप्य प्रतीकारैस्समाधानं कुर्व्वन्ति" इति "हे ब्रह्मन्! यमो यत्र पापिनो यातयते यातनामनुभावयति, स्थानं तदस्मभ्यं कथय" इति पृष्टो मुनि ब्रूते—कश्यपो नामाऽष्टमस्सूर्योऽस्ति। स सर्वदा महामेरौ पर्वते वसति। तस्मादुत्पन्ना आरोगादयोऽन्ये सप्तसूर्याः।

ते द्यावापृथिव्योर्मध्ये रौरवादिनरकप्रदेशेषु प्राणिनस्सदा मारयन्ति। मारितास्ते स्वस्वपापकर्मानुगुणं स्वशरीरं विकलाङ्गं प्राप्नुवन्ति—कश्चिदन्धः कश्चिन्मूकः, कश्चित्पङ्गुः, कश्चित्कुणिरित्यादिरूपेण। मशकमत्कुणक्रिमिदंशादिरूपेणाऽप्यत्यन्तपापिष्ठा जायन्ते, तदानीमेव केनचन मारिता म्रियन्ते। ते सर्वे स्वस्वकर्मानुगुणमुत्पत्तिविनाशादिभि स्सुस्वलेशरहितास्सर्वदा पीड्यमाना एव वर्तन्त इति See also गौतम धर्म्मसूत्र।

पापिष्ठं लोकम् । गत्वा च तत्र यावत् कर्मजन्यमदृष्टं तावत् तत्फलमनुभूय, ततस्समाप्ते पुण्ये पापे वा पुनरिमं मानवं नारकं वा लोकमवशिष्टेन कर्मफलेन लभन्ते चेष्टन्ते च तत्र तदनुरूपेणैव । एवं च स्वर्गादयो लोका नित्याः । तत्संबन्धः परमस्य जन्तोरनित्यस्स्वकर्मानुसारेणेति । अनेन जगतो नित्यता सत्यता च स्थापिता भवति मीमांसकानां मते । स्मृतिकर्तारोऽप्येवमेव स्वीकुर्वन्ति । अतः स्वर्गादिसुखस्य सत्यत्वेऽपि क्षयिष्णुत्वमनिवार्यम् ।

## मीमांसकमते मोक्षास्तित्वम्

केचिदेवं कथयन्ति—न मीमांसकमते मोक्षाख्यः पुरुषार्थश्चतुर्थोऽस्ति । तेषां स्वर्गसुखस्यैव तद्रूपत्वाङ्गीकारात् । यागादिकमनुतिष्ठन् पुरुषो यथावदनुष्ठितस्य तस्य कर्मणः फलं दुःखासम्मिश्रं निरवधिकमुपभुञ्जानस्समवाप्तकामः आत्मानं कृतार्थं मनुते । न ततोऽधिकं किमपि वाञ्छति । न चाऽस्ति ततः श्रेष्ठतमं किञ्चिदपि फलं लोके यदवाप्तुं प्रयतेत पुमान् ।

स एव हि परमः पुरुषार्थो यस्तैस्तैः कर्मभिर्यथावदनुष्ठितैः पुरुषैरवाप्यते । स वेदबोधितदेशप्राप्तिसाधनीयो निरतिशयस्सुखविशेष एव । न ततोऽतिशयितस्सुखविशेषोऽस्ति कुत्राऽपि । अतएव श्रुतावपि सोमयागानुष्ठानानन्तरममृतत्वप्राप्तिर्यजमानमुखेनाऽनुवर्ण्यते "अपाम सोमममृता अभूम, अदर्शज्योतिः" इत्यादिना । अतो मोक्षाख्यममृतत्वप्राप्तिरूपं फलमपि कर्मजन्यमेव । अतएव भगवद्गीतास्वपि "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" इति कर्मण एव मोक्षजनकत्वं-

सुस्पष्टमभिहितम्'। अत्र सर्वत्र दुःखासम्भिन्नः सुखविशेष एव निरवधिको मोक्षामृतादिपदैरभिधीयते । अतो मीमांसकमते कर्मजन्यस्वर्गाद्यपेक्षया नास्ति श्रेष्ठतममतिरिक्तं फलं किञ्चिदिति । अतएव जैमिनिना महर्षिणा सूत्रकारेण भाष्यकारेण च शबरस्वामिना न कुत्राऽपि स्वशास्त्रे स्वर्गातिरिक्तो मोक्षाख्य उपवर्णितः फलविशेषः । स्वर्गस्य तु स्वरूपं साधूपवर्णितं ताभ्यां चतुर्थाध्याये तृतीयपादे । एकादशाध्यायाद्यधिकरणे तत् पुनराम्रेडितम् । एतेन स्पष्टमिदमवगम्यते—न स्वर्गातिरिक्तं वस्तु मोक्षाख्यं मीमांसका अङ्गीकुर्वन्तीति ।

अत्राऽभिधीयते—मीमांसकमतेऽपि स्वर्गोऽपवर्गश्च तदतिरिक्तोऽङ्गीकृत एव । आचार्यकुमारिलपादैः श्लोकवार्त्तिके प्रथमाध्यायप्रथमपादपञ्चमसूत्रे मोक्षस्वरूपं, तदुपगमावश्यकता, तदभावेशास्त्रस्याऽपूर्णता च सम्यगुपापादिषत । तदनन्तकालिकास्सर्वेऽपि मीमांसकप्रवराः प्रभाकरमिश्रप्रभृतयो निश्शङ्कं निर्विवादमभ्युपगच्छन् मोक्षं, उपापीदंश्च तत्स्वरूपम् । भाष्यकारैस्तु कर्मैकप्रवणचित्तानां पुरुषाणां विषये मोक्षस्वरूपनिरूपणं नाऽतीव प्रयोजनमावहेत् प्रत्युत श्रद्धामनपायिनीं कर्मविषयिणीं शिथिलयेदिति मन्वानैस्ताटस्थ्यमवलम्बितं तद्विषय इति युक्तमुत्पश्यामि ।

## मीमांसकाभिमतमोक्षस्वरूपम्

तत्र मीमांसकाभिमतमोक्षस्वरूपमित्थंप्रतिभाति—प्राणिकर्मवशात् तद्भोगायैव विचित्रमिदं विविधतरुगुल्मलतानदनदी-

गिरिसिन्धुग्रहनक्षत्रतारादिरूपं समुत्पन्नं जगत सत्यमेव । तदर्थमेव च भोगायतनमिदं शरीरमपि समजनि । तदवच्छिन्नो जन्तुरात्मनीनं सुखं दुःखं वा समनुभवन्नेव कर्माण्यपि विविधानि सुखदुःखजनकानि स्वर्गनरकाधायकानि वा समकालमेव कुर्वाणः, सञ्चिनोति तत्फलमग्रिमकालोपभोगाय । प्राप्ते च तदुपभोगक्षमे काले तदुपभुञ्जानः तदैव च कर्माण्यप्यनुतिष्ठति । कालान्तरे च भुंक्ते तदीयं फलम् इतीयमनादिपरम्परा प्राणिनामनवच्छिन्ना प्रसरन्त्येवाऽऽस्ते । सोऽयमनादिस्संसार इत्युच्यते । एवमनवरतं संसरन् जीवः यदा केनाऽपि कदाचित् स्वकृतेन पुण्यकर्मविशेषेण वेदान्तवाक्यार्थविचारे प्रवृत्तः, ततएव देहाद्भिन्नमसङ्गम-जरममरं दुःखातीतं जानाति, तदा तस्य देहसम्बन्धे वैराग्यं पुण्यकर्मवशादेव जायते । ततस्तत्सम्बन्धेषु कर्मसु बन्धजनकेषु अनास्था जायते । सत्यामनास्थायामुपेक्षापूर्वकं तदननुष्ठानं भवति । अननुष्ठाने न फलोत्पत्तिकारणमस्ति । नित्यानि नैमित्तिकानि च कर्माणि फलसम्बन्धाभावात् प्रत्यवाय-परिहाराय तावदनुष्ठेयान्येव । एवं च नित्यानि नैमित्तिकानि च कर्माणि कुर्वाणः, काम्यानि तान्यननुतिष्ठन् कर्मानुष्ठानाहार-विहारादिकालं विहाय, इतरेषु कालेषु अनन्यशेषभूतोपनिषद्-भागप्रतिपादितं परमात्मस्वरूपमनवरतमनुसन्दधानो यद्यवतिष्ठेत तदा पूर्वानुष्ठानोपात्तकर्मफलस्य भागेन क्रमशो नाशात् उत्तरत्र तादृशकर्मानुष्ठानाभावेन तदीयफलसञ्चयाभावेन तदौपयिक-शरीरारम्भककर्मादृष्टाभावेन स्वभावादेव पुरुषः स्वस्वरूपेऽ-वस्थितो भवति । स एव तस्य मोक्षः । स चैकस्मिन्

जन्मनि बहुषु वा जन्मसु भवति तत्तददृष्टानुसारम् । तच्च फलैकसंवेद्यम् । न प्रमाणान्तरेण तदियत्ताऽवधारयितुं शक्यते । न च वेदान्तशास्त्रवदत्र कर्मणां कर्मजन्यादृष्टानां वा ज्ञाननाश्यत्वमभ्युपगम्यते । तथाऽभ्युपगमे प्रमाणाभावात् । तथात्वे प्रारब्धकर्मादृष्टस्याऽप्यविशेषात् ज्ञाननाश्यत्वापातात् । (भगवद्गीता "कालाग्निस्सर्वकर्माणि भस्मसात् कुरुते तथा") ।

अत उत्पन्नस्य कर्मादृष्टस्य फलोपभोगेनैव नाशोऽभ्युपगम्यते, न प्रकारान्तरेण । अतस्सञ्जातात्मज्ञानस्याऽपि यावत्कर्मोत्पन्नफलोपभोगमनुवर्तत एव संसारः । अर्थात् जगद्व्यापारेण ससम्बद्धो भवत्येव । यदा च फलोपभोगक्षयः, तदास्य जगत्सम्बन्धो नष्टो भवति । स एव मोक्षकालिकोऽवस्थानविशेषः । एवं च मीमांसकमते जगत्सम्बन्धविलय एव मोक्ष इत्युक्तं भवति । न तु जगतो मिथ्यात्वमनित्यत्वं वा मतान्तरवदिति गभीरतरशास्त्रोदधिमथनसमुन्नीतः सुप्रथितः पन्थाः । अतएव 'यत्रत्यस्य सर्वमात्मैवाऽभूत् तत् केन कं पश्येत्' 'आत्मैवेदं सर्वम्', 'नेह नानाऽस्ति किञ्चन' 'इदं सर्वं यदयमात्मा', इत्यादीनि वचनानि आत्मभेदनिषेधपराणि, जगन्मिथ्यात्वावबोधकानि च तानि सर्वाण्यौपचारिकतया नेतव्यानि । जगतःचिरकालावस्थायितां निषेधन्ति । यथा हि स्वप्नदृष्टः प्रपञ्चः भ्रान्त्या परिकल्पितः कियन्तंचन कालं स्वप्नदशायामेव दृष्टिगोचरीभूय पश्चाद्विनाशमुपगच्छन् उपभोगाक्षमो भवति, तथेदमपि जगत् ब्रह्मापेक्षया न चिरकालावस्थायीत्यनेनैव सादृश्येनोपचारात् भ्रान्तिरित्युच्यते पुरुषाणां विषय-

वैमुख्यं जनयितुं तद्द्वारा मोक्षाभिरुचिमभिवर्द्धयितुं च। अतो नानेन प्रपञ्चस्य मिथ्यात्वं मिथ्याज्ञानजन्यत्वं वा बोधयितुं शक्यते। येन तस्याऽऽत्यन्तिको विलय आशंक्येताऽपि। किन्तु प्रपञ्चस्य स्वसम्बन्धनाश एव। संसरतो हि पुंसः प्रपञ्चेनाऽनेन त्रिधा सम्बन्धो भवति—शरीरेण, इन्द्रियेण, चक्षुरादिना, विषयश्च स्रक्चन्दनादिभिः, रूपरसादिभिश्च। पुंसः स्वभोगायतनं शरीरम्। भोगो नाम विषयानुभवः। भोगसाधनानीन्द्रियाणि। भोग्या विषयाः। एतैः पुरुषो बध्यते। बन्धनं नाम तदायत्तता। इन्द्रियाणि चक्षुरादीनि स्वस्वविषयेषु प्रवर्तमानानि तद्गतसौन्दर्यसौष्ठवसौभाग्यादिकं स्वविषयीकृत्य, तन्मनसि विनिवेशयन्ति। तदुपरक्तं मनः तदुपभोगाय स्वाश्रयमात्मानं प्रेरयति। तत्प्रेरितश्चाऽऽत्मा तत्तद्विषयानुभवे प्रवर्तते। दुर्बलो यदि स पुरुषः, तदा तानीन्द्रियाणि तमात्मवशीकृत्य स्वानुकूले पथि तं नयन्ति। सोऽपि तद्वशीकृतो युक्तायुक्तविचारशून्यः कृत्याकृत्यविमूढधीर्विषयेषु उच्चावचेषु स्वैरं प्रवर्त्यमानः बलाद्दुष्टे पथि नीतः पतति। पतितोऽशक्नुवन्मात्मानमुद्धर्तुं क्रमशो गच्छन्नधस्सीदति सुतराम्। उक्तं हि भगवद्गीतायाम् "इन्द्रियाणि प्रमाथानि हरन्ति प्रसभं मनः"[1] इति। "न स तत् पदमाप्नोति संसारं चाऽधिगच्छति[2]" इति च कठोपनिषदि।

यदि तु धीरो मेधावी पुरुषः, तदा इन्द्रियाण्यात्मवशीकृत्य

---

1. भगवद्गीता. २.६०
2. कठोप. १. ३. ७.

स्वेच्छानुसारेण तानि प्रवर्तयति युक्तायुक्तविचारशीलः, तदा तानि स्ववश एवाऽवस्थापयति कुशलस्सारथिरिवाऽश्वान् । तदा च क्रमशोऽभिवृद्धिमात्मनीने पथि समधिगच्छन्, अन्ते समुद्धरत्यात्मानम् । उक्तं च "स तु तत् पदमाप्नोति यस्माद्भूयो न जायते"[1] इति ।

एवं च पुरुषस्य शरीरेन्द्रियविषयसम्बन्धोऽविच्छिन्न एव बन्धः । तत्रैव च पुनःपुनरयं संसरतीति स संसार इत्युच्यते । त्रयाणामेषां शरीरेन्द्रियविषयाणां आत्यन्तिकसम्बन्धविच्छेद एव मोक्षः । आत्यन्तिकत्वं च पूर्वोत्पन्नस्य शरीरेन्द्रियविषयसम्बन्धस्य विनाशः । नूतनस्य तस्यानुत्पत्तिः । ताभ्यां च सुखदुःखोच्छेदः । तदुच्छेदश्च धर्माधर्मोच्छेदात् । धर्माधर्मोच्छेदश्च, उत्पन्नानां धर्माणां (धर्मजन्यादृष्टानां) फलोपभोगेन, अधर्माणां (अधर्मजन्यादृष्टानां) नित्यनैमित्तिककर्मानुष्ठानेन च भवति । उत्पाद्येषु च तेषु काम्यकर्मणामननुष्ठानादेव तदुत्पत्तिर्न भवितुमर्हति । प्रतिषिद्धकर्मणामप्यननुष्ठानादेव प्रत्यवायः पापापरनामा नोत्पद्यते । एवं च पूर्वेषां शरीराम्भकाणां नाशादपूर्वाणां, उत्तरेषामनुत्पत्तेः असतिशरीरारम्भके हेतौ पूर्वशरीरनिपाते च अशरीरोऽवस्थितो भवति । स एव मुक्त इत्युच्यते । अतो मोक्षार्थिभिः पूर्वोक्तरीत्याऽशरीरत्वसम्पादने यतितव्यम् । न हि आत्मज्ञानमात्रस्य मोक्षोपयोगित्वम् । तस्य कर्मानुष्ठाने प्रवृत्तिसम्पादनार्थत्वात् । यावद्धि पुरुषः आत्मनोऽविनाशित्वरूपं नित्यत्वं नाऽवगच्छति, तावत् कालान्तरजन्यफलकेषु कर्मसु न

---

1. कठोप. १. ३. ९.

कदाऽपि प्रवृत्तिमादध्यात् । आशुतरविनाशिनः कर्मणः कालान्तरभाविफलं प्रति साधनत्वासम्भवे न साधारणतस्तस्य साधनाभावनिश्चये जाते प्रकृतस्य च निष्फलत्वे निष्फले तस्मिन् प्रवृत्तिजननासम्भवे न कालान्तरे तस्यफलोत्पत्तिं निश्चिन्वानः शास्त्रबलात् कर्मसु प्रवर्तेत । यदि तु तावत्कालपर्यन्तावस्थायित्वमात्मनो न निश्चिनुयात्, तदा स्वस्य कर्मजन्यफलभोक्तृत्वाभावं निश्चित्य कर्मसु नैव प्रवर्तेत । अतस्तत्प्रवृत्तिसम्पादनायैवाऽऽत्मनो नित्यत्वादिकं स्थापनीयम् । सिद्धे च नित्यत्वे आत्मानं ध्वंसाप्रतियोगिनं कूटस्थनित्यं मत्वा कालान्तरभाविस्वर्गफलाय कर्मसु प्रवर्तेत । तावन्मात्रमेव प्रयोजनमात्मज्ञानस्य इति श्रीमतां कुमारिलपादानां सिद्धान्तः । यथोक्तं तैरेव—

आत्माज्ञातव्य इत्येतत् मोक्षार्थं न च चोदितम् ।
कर्मप्रवृत्तियोग्यत्वमात्मज्ञानस्य लक्ष्यते ॥ इति

## द्विविधमात्मज्ञानम्

आत्मज्ञानस्य तावत् द्वैविध्यं मीमांसकैरभ्युपगम्यते । एकं क्रत्वर्थं एकं पुरुषार्थम् । क्रतुषु यदुपयुज्यते तत् क्रत्वर्थम् । अर्थात् आत्मनस्स्वरूपे नित्यत्वादिके ज्ञाते तद्बलात् क्रत्वनुष्ठाने पुरुषः प्रवर्तेत । तच्च पूर्वं निरूपितम् । अनन्यशेषभूतं स्वतः प्रधानं च किञ्चिदात्मज्ञानमस्ति । यस्य मोक्ष एवोपयोगः । तथाहि—यः खल्वात्मानमस्मात् पाञ्चभौतिकात् विमुक्तं देहादजरममरं दुःखातीतं च जानाति स नश्वरेऽस्मिन् देहसम्बन्धे विरज्यति । ततस्तस्य तत्सम्बद्धेषु कर्मसु औदासीन्यं जायते ।

ततो विरमति तदनुष्ठानात् । अनुष्ठानाभावे न तानि फलं दातुं प्रभवन्ति । अत उत्तरत्र कारणाभावात् देहान्तरं नोत्पद्यते । पूर्वकर्मादृष्टानां भोगे न नाशः । ततः स्वरूपेणैवावतिष्ठते । एतादृशेऽशरीरित्वरूपमोक्षसम्पादने सर्वैरेवावश्यं यतितव्यम् । न तु विवेकज्ञानमात्रेण कृतार्थं मन्यमानैस्स्थातव्यम् । उक्तं हि भगवता कुमारिलेनैव ।

"सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते ।
परांगं चात्मविज्ञानादन्यत्रेत्यवधार्यताम् ।"

इति । अग्रेऽप्युक्तम्–

मोक्षार्थी न प्रवर्तेत तत्रकाम्यनिषिद्धयोः ।
नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया ।
तत्र ज्ञातात्मतत्वानां भोगात् पूर्वक्रियाक्षये ।
उत्तरप्रचयाभावात् देहो नोत्पद्यते पुनः ।
कर्मजन्योपभोगार्थं शरीरं न प्रवर्तते ।
तदभावेन कश्चिद्धि हेतुस्तत्रावतिष्ठते ।
तस्मात् कर्मक्षयादेव हेत्वभावेन मुच्यत [1]इति ।

जयन्तभट्टैरपि न्यायमञ्जर्यां मीमांसकमतानुवादप्रसरे–तथा च मुमुक्षुः नित्यनैमित्तिकं कर्माऽवश्यमनुतिष्ठेत् । अननुतिष्ठन् प्रत्यवेयात् इति कुतोऽस्य बन्धः स्यात् । काम्यं निषिद्धं च कर्म स्वर्गनरककारि विस्पष्टमेव बन्धसाधनमिति तत् परिहरेत् । तदाह–"नित्यनैमित्तिकमुच्यते" इति ।

---

1. श्लोकवार्त्तिक १.१.५.

प्राक्तनस्य कर्मसंचयस्य भोगादेव क्षयः । आतमविदश्च मुमुक्षोः अयमनुष्ठानक्रमो भवति नेतरस्येति[1]" ।

एवं चैकमात्मज्ञानं तन्नित्यतादिकं च पुरुषाणां कर्मानुष्ठान-प्रवृत्तावुपयुज्यते । अपरं च यन्मोक्षायोपयुज्यत इति सिद्धम् । इदं च भाष्यकारैरनुक्तमपि वार्तिककारैस्सम्यङ् निरूपितं, अनन्तरकालिकैस्सर्वैरपि मीमांसकैरनुसृतमनुमोदितं च । अतो मीमांसकैरपि मोक्षोऽङ्गीक्रियत एवेत्यत्र नास्ति संशयः । तथापि न तैर्बहुदूरं गतम् । यतः मोक्षपदार्थः श्रद्धालूनां कर्मसु प्रवृत्तिशैथिल्यमापादयेत् । प्रायेन हि पुरुषाः परिश्रमभीरवः बहुशः श्रुतवेदवाक्या अपि कष्टात्मके कर्मणि न प्रवर्तन्ते । यदि च तदासरतामल्पफलतां वा श्रुतिवाक्यादेव ते शृणुयुः तदा सर्वथा ते तत्र मन्दप्रवृत्तयो निवृत्तमतयो वा भवेयुः । ततस्सर्वोऽपिवैदिककर्ममार्गोऽनुष्ठातुरभावादुच्छेदं प्राप्नुयात् । तेऽपि पातित्यभाजो भवेयुः इति विचार्यैव कर्मस्वरूपतदनुष्ठान-तत्फलप्रतिपादनप्रवृत्तैर्मीमांसकै र्नातीव पराक्रान्तमिह वस्तुनि । दिङ्मात्रं तु वस्तुयाथात्म्यावगतये संसूचितम् ।

किञ्च नैरात्म्यवादिनां बौद्धार्हतादीनां खण्डनार्थं प्रवृत्तैरेभिः आत्मास्तित्वस्वरूपनिरूपणमात्रविश्रान्तैस्तावतैव स्वपक्षं स्थापितं मन्वानैर्नाऽतिदूरं पराक्रान्तम् । अवशिष्ट-निरूपणाय बद्धकटीनां कार्यमेतत् ते स्वग्रन्थेषु यथेष्टं प्रब्रूयुरि-त्यपि विचार्य नाऽग्रे बहुदूरंगतम् । उक्तं हि कुमारस्वामिना—

---

1. न्यायमञ्जरी पृ ५२१. द्वि. भा.

इत्याह नास्तिक्यनिराकरिष्णु-
रात्मास्तितां भाष्यकृदत्र युक्त्या ।
दृष्टत्वमेतद्विषयप्रबोधा
प्रयाति वेदान्तनिषेवणेन' इति ।

मृदितकषायाणामेवैतद्वक्तव्यं, न कर्मसङ्गिनामित्युपरम्यत । उक्तं हि भगवता—"न बुद्धिभेदं जनयेदज्ञाणां कर्मसङ्गिनाम् इति" ।

## कर्मफलं क्षयिष्ण्वेव

युक्त्या विचार्यमाणेऽपि सर्वथेदमेवसिध्यति । न हि तत्तत्क्रियाजन्यं फलमविनाशि भवितुमर्हति । यद्यज्जन्यं वस्तु तत् सर्वमद्यैव वा कालान्तरे वा विनाशशाल्येव वयं पश्यामः । अतः कर्मभिः प्राप्यः स्वर्गादिलोकसम्बन्धः चिरकालावस्थायि भवतु नाम । परं कदाचिदवश्यं नश्येदित्येव कथनं बुद्धिमतां बुद्धिमारोहेत् । विचारशीला मीमांसकाः किमपि वस्तु अविचारितसिद्धमभ्युपगन्तमनीहमानाः कथमिदं विचारपथातीतमङ्गीकर्तुमग्रे भवेयुः । कथं वा ते कर्मणा महताऽल्पेन वा नित्यनिरतिशये स्वर्गसुखे लब्धे-कर्मान्तिराणामापतितमानर्थक्यं वारयेयुर्वहेयुर्वा । न चेदमपि वक्तुं शक्यं-रुचीनां वैचित्र्यादिदं साधूपपन्नं भविष्यति । कश्चिदग्निहोत्रेण स्वर्गं प्राप्तुमभिलषति । अन्यस्तु तमेव स्वर्गं चातुर्मास्यैः । अपरस्तु ज्योतिष्टोमेन, इतरे तु वाजपेयेन । एवं च यो यमनष्ठातुमीहेत

तस्य स इति विकल्पेन सर्वेषां सार्थक्यं कुतो न स्यादिति । अग्निहोत्रं स्वल्पतममल्पकालाल्पव्ययसाध्यम् । ज्योतिष्टोमस्तु महता व्ययेन परिश्रमेण च महता, उपवासादिना कायक्लेशेन च संसाध्यः । ततोऽप्यधिककालव्ययःक्लेशसाध्यो वाजपेयादिः । तत्र सर्वेषाममीषां परिमाणतः सारतश्च तुल्यमेव यदि स्यात् फलम्, तदा कश्चित् अल्पायासेन तत् फलं प्राप्नोति, कश्चित् तावत्परिमाणमेव तत् अतिमहता प्रयासादिना प्राप्तुं यतत इति कथनं न वुद्धिमतां बुद्धिमारोहति । तुल्यबलयोस्समानफलयोरेव हि कर्मणोर्विकल्पश्शास्त्रकारैरङ्गीकृतः लौकिकैश्च समादृतः । रुचिभेदोऽपि समानेष्वेव विषयेषु । अतो महाप्रयाससाध्यं तदेव फलं तावदेव चाल्पेनैवाऽऽयासेन यदि पुरुषः प्राप्नुयात्, तर्हि महान्तं प्रयासं तदर्थमेव सोढुं न कोऽपि कदाऽपि स्वीकुर्यात् । अतः महतां कर्मणामानर्थक्यं तदवस्थमेवेति तत्परिहाराय, फले कालकृतः सारासारत्वकृतो भेदेऽवश्यमभ्युपेय एव स्यात् । यद्येवं, तर्हि तत्राऽनित्यता वलादायात्येव । सर्वमिदं सम्यक् विचार्यैव मीमांसकाः कर्मफलस्य क्षयिष्णुत्वमङ्गीचक्रुः । परं सत्यं तत्, न मिथ्याभूतमितिनिरूपितं पूर्वम् ।

## शास्त्रेषु पूर्वमीमांसैव श्रेष्ठतमा ।

प्रमाणप्रमेयादिनिरूपणार्थं प्रवृत्तेषु शास्त्रेषु विचारशास्त्रस्य मुख्यता स्वीक्रियते । तत्राऽपि धर्मविषयकं विचारमारचय्य निर्णयतो धर्मस्वरूपादिकं पूर्वमीमांसाशास्त्रस्यैव शास्त्रान्तरा-

पेक्षया प्राधान्यमङ्गीक्रियते शास्त्रकारै गौरवं च । यतस्तन्निखिलजनिमज्जगत्कल्याणैकनिदानानादिशब्दधर्मब्रह्मस्वरूपादि-विचारनिर्णयफलकम् । इदं हि धर्ममीमांसाशास्त्रम् । मीमांसाशब्दश्च 'मान पूजायामितिधातोः' "मान् वधदान्शान्भ्यो-दीर्घश्चाऽभ्यासस्य" (पा. सू. ३. १. ६) इति पाणिनिसूत्रेण 'मानेर्जिज्ञासायाम्' इति वार्तिकसहकृतेन सन्प्रत्यये, अभ्यासे-कारस्य दीर्घे च कृते ततो ङाप्प्रत्यये निष्पन्नः । अतः पूजितं विचारं सोऽवबोधयति । विचारो नाम युक्त्यादिभिर्वस्तुस्वरूप-विवेचनम् । वेदार्थस्य धर्मत्वेन तद्विषयको विचारः पूज्यविचारो गौरवान्वितविचार इति पूर्वाचार्यैरेव सम्य-ङ्निर्णीतम् । विचारस्य हि पूज्यत्वं विषयगौरवादेव । यद्यप्युत्तरमीमांसाया अपि पूज्यविचाररूपताऽस्ति, सर्वाति-शायिब्रह्मविचाररूपत्वात्तस्य, तथाऽपि बहूपकारकत्वदृष्ट्या पूर्वमीमांसाया एव प्राशस्त्यं प्राथम्यं चावगन्तव्यम् । उत्तर-मीमांसाया हि विषयवैराग्याय परां कोटिमारूढास्सहस्रेषू लक्षेषु वा द्वित्राः पञ्चषा वा प्रवर्तेरन् । उक्तं हि भगवतैव-'मनुष्याणां सहस्रेषु कश्चित् यतति सिध्यये' इति । पूर्वमीमांसायां तु स्वर्गपुत्रपश्वाद्यभिलाषिणस्त्रैवर्णिकास्सर्वेऽपीति विशालोऽस्य विषयोऽधिकारी उपकारश्चेत्यस्या एव पूर्व-मीमांसाया गौरवमधिकमभिदधति साम्प्रदायिकाः ।

किञ्च विचित्रतरेयं विचारप्रणाली विषयाणां मीमांसायामेव दृश्यते, नाऽन्यत्र । विचारस्वरूपमवयवपञ्चकपरिपूर्ण-मेवाऽर्थनिर्धारणे समर्थमिति मीमांसकानामाशयः । तथा हि-

प्रथमतो विषयस्य कस्यचिन्निर्णयार्थं प्रवृत्तेन पुरुषेण तदुपस्थानं कर्तव्यम्—अमुं विषयमधिकृत्याऽद्य मया विचारः कर्तुमिष्यत इति। सोऽयं प्रथमोऽवयवः। तत्र संशयः कोटिद्वयात्मकः अधिकोटियुक्तो वा समुद्भावनीयः—एवं भवितुमर्हति वा? एवं वा? इति। ततस्तत्र पूर्वपक्षस्साधनीयो यावतीभिर्युक्तिभिस्संभवन्तीभिरूपष्टम्भयितुं शक्यते। ततोऽन्ते सिद्धान्तस्समर्थनीयः पूर्वपक्षप्रतिपक्षरूपः पूर्वपक्षोक्तयुक्तिप्रत्यर्थिनीभिस्ततो बलवतीभिश्च युक्तिभिस्समुष्टब्धः निर्णयात्मकः विषयस्य। चतुर्थोऽयमवयवोऽधिकरणस्य। अयमेव प्रधानभूतः। अन्ये च चत्वारोऽवयवाः सिद्धान्तसमर्थनायैव तमनुवर्तन्ते। सत्यां च सिद्धान्तनिर्णिनीषायामितरेऽवयवाः प्रवर्तेरन्, नाऽन्यथा। एवं चतुर्भिरवयवैः कृतस्य वाक्यार्थविषयकस्य निर्णयस्य फलकथनं पञ्चमोऽवयवः। एवं च विचारार्थं उपादीयमानो (१) विषयः (२) तत्र संशयः (३) पूर्वपक्षः (४) तत्र सिद्धान्तः (५) विचारप्रयोजनम् इत्यवयवपञ्चकमधिकरणमित्युच्यते पूर्वमीमांसायाम्। उक्तं हि प्राचीनाचार्यैः—

विषयो विशय (संशय) श्चैव पूर्वपक्षस्तथोत्तरः।
प्रयोजनं च पञ्चाङ्गं प्राञ्चोऽधिकरणं विदुः"

इति। केचित् षड्ङ्गमधिकरणं कथयन्ति—मते तेषां पूर्वोत्तराधिकरणसङ्गतिष्षष्ठोऽवयवः। तदा "प्रयोजनं सङ्गतिश्च प्राञ्चोऽधिकरणं विदुः" इति पाठः। प्रयोजनकथनमन्तरा न कोऽपि किञ्चित् श्रोतुं कर्तुं वा वाञ्छति प्रेक्षावान्।

अतस्सर्वत्राऽपि प्रवृत्तेः फलमवश्यं कथनीयम्—एतद्विचारप्रवृत्तेरिदं फलम् इति ।

एवं प्रकृते पूर्वोक्तविषयेण सह अद्य वक्ष्यमाणस्य तस्य कस्सम्बन्धः इति पूर्वसम्बन्धोऽपि वर्णनीयः । अन्यथाऽसम्बद्ध-प्रलापित्वरूपं दोषं वक्तर्यारोपयेयुस्सामाजिकाः । अतस्सर्वथा निरूप्यमाणा विषयाः शृङ्खलावत् परस्परमनुबद्धा एव भवितु-मर्हन्ति, न विश्रृङ्खलाः । अतएव मीमांसायां सङ्गतेर्महानादरो दरीदृश्यते । यद्यपि नैयायिकादयोऽपि स्वशास्त्रेषु सङ्गति-माद्रियमाणा एव दृश्यन्ते तथापि यावनस्यास्समादरः पूर्वोत्तर-मीमांसयोः न तावानन्यत्राऽवलोक्यते । अत्र हि पूर्वमीमांसायाः सन्ति सहस्राण्यधिकरणानि[1] । सर्वाण्यपि तानि पूर्वाधिकरणेन वाऽवश्यं सम्बद्धान्येव समुपलभ्यन्ते । किञ्च शास्त्रान्तरे प्रासङ्गिकीसङ्गतिरधिका । अत्र तु अत्यल्पीयसी । यद्यपि भाष्यवार्तिककारादयः प्रगल्भा व्याख्यातारो न स्वग्रन्थेषु सङ्गतिं लिखन्ति । परमन्येऽनन्तरकालिकाः प्रायेण स्व-व्याख्यानेषु सङ्गतिं निरूपयन्ति व्याख्यानरसिकाः । सङ्गतिर्नाम पूर्वोत्तरसम्बन्ध इति स्पष्टमेव ।

## वैदिकीयं विचारशैली

विषयं कञ्चनाऽधिकृत्य विचार्य निर्णयकरणं नास्माक-मवाक्कालिकी । किन्तु वैदिकादेव समयात् प्रसृता प्रथिता चेत्य-

---

१. पूर्वमीमांसायां सहस्रमधिकरणानीति प्रायोवादः । सूक्ष्मेक्षिकया गणनायां माधवमते ९०७ । अन्येषां तु न्यूनाधिकतादृश्यते ।

वगम्यते । यतः प्रायेण ब्राह्मणग्रन्थेपूत्पश्यामो विचाररूपमिदं क्लिष्टेषु विषयेषु क्रियमाणम् । तत्र मन्त्रात्मिकायामृग्वेद-संहितायामेतादृशस्य विधिगतविचारस्याऽवसर एव नास्तीति न तत्रायं शक्यत उपलब्धुम् । ब्राह्मणभागेष्वैतरेयतैत्तिरीय-शतपथादिगतेषु परिदृश्यत एव । तेषु दिङ्मात्रमिह प्रदर्श्यते—

तैत्तिरीयसंहितान्तर्गतेऽग्निहोत्रब्राह्मणे अग्न्युपस्थानमधिकृत्य "उपस्थेयोऽग्नी३र्नोपस्थेया३ इत्याहुः मनुष्यायेन्वै योऽहरहराहृत्या-थैनं याचति सइन्वै तमुपार्च्छति अथ को देवानहरहर्याचिष्य-तीति तस्मान्नोपस्थेयः । अथो खल्वाहुराशिषे वै कं यजमानो यजत इति एषा खलु वा आहिताग्नेराशीर्यदग्निमुपतिष्ठते तस्मादुपस्थेयः" इति । अत्र प्रतिदिनं सायं च प्रातश्चा-ऽग्निहोत्रं कृत्वा तदनन्तरं क्रियमाणमाहवनीयाग्नेरुपस्थानं विषयः । तत् कर्तव्यं न वा इति संशयः । स प्रथमभागे न उपस्थेयोऽग्निः ? नोपस्थेयः इत्यनेन प्रतिपाद्यते । तस्मानोप-स्थेयः इति पूर्वः पक्षः[1] । तत्र हेतूक्तिः—'मनुष्याय' इत्यादिना

---

१. पूर्वपक्षसाधकयुक्तिवचनस्याऽयमर्थः—यत् किञ्चिद्वस्तु जम्बीर-फलादिकं दत्वा यं कंचन धनिकं मनुष्यं यदि कश्चिद्धनादिकं याचते, तेन तं पीडयत्वेव सदुःखितो भवति-कथमयं प्रतिदिनमागत्य मामुपद्रव-तीति । देवास्तु महामहिमशालिनः, तान् को वा याचितुं प्रभवेत् । उपस्थानं नाम धनपुत्रपश्वादियाचनमेव । अतो नेदं याचनरूपम् उपस्थानं कर्तव्यमिति । सैद्धान्तिकयुक्तिवचनार्थस्तु—यदिदमुपस्थानाख्यं कर्म तदाहिताग्नेर्यजमानस्याऽऽशीःप्रार्थनरूपम् । सर्वोऽपि पुमानात्मान आशिषं स्वमहत्तरेभ्यः प्रार्थयेदेव । न तेन कोऽपि मनुष्योऽपि कुप्यति, प्रत्युत तुष्यत्वेव । अत उपस्थानमवश्यं कर्तव्यमेवेति । तै. स. १.५.९.६.

'याचिष्यतीति' इत्यन्तेन भागेन। ततः 'तस्मादुपस्थेयः' इति सिद्धान्तकथनम्। ततः पूर्वतनः 'आशिषे वै' इत्यादिः 'यदग्निमुपतिष्ठते' इत्यन्तो भागः सिद्धान्तं साधयितुं युक्तिं निरूपयति। एवं चाऽत्राऽग्निहोत्रोपस्थानं विषयः, तत्र संशयः, तत्र पूर्वपक्षः, तत्र सिद्धान्तः इति चत्वारोऽवयवा निरूपिताः। फलं तु तदनुष्ठानसिद्धिरूपं स्पष्टमेवेति न पृथगुक्तं तत्।

एवं तत्रैवाऽन्यत्र—"उत्सृज्यां३ नोत्सृज्यां३ इति मीमांसन्ते ब्रह्मवादिनः, तद्वाहुरुत्सृज्यमेवेति अमावास्यायां च पौर्णमास्यां चोत्सृज्यमित्याहुः, एते हि यज्ञं वहत इति, तेत्वाव नोत्सृज्ये इत्याहुः, ये अवान्तरं यज्ञं भेजाते इति या प्रथमा वयष्टका तस्यामुत्सृज्यमित्याहुः[1]" इत्यादिना विषयो विचारमुखेनैव प्रवर्त्तितः। अत्र 'मीमांसन्ते' इति मीमांसाशब्दोऽपि प्रयुक्त इति विशेषः।

एवं "सहस्रँ सहस्रतम्यन्वेती३ सहस्रतमीँ सहस्रा३म्" इति ब्रह्मवादिनो वदन्ति न्यङ् ङग्निश्चेतव्या३ः उत्ताना३ः इति इत्यादयो बहुलमुदाहार्याः।

अत्र सायणाचार्योऽपि—वेदेऽपि तत्र विचारपूर्वकं सन्देहाप-

---

१. तै० सं० ७. ५. ७. अस्यायमर्थः—उत्सर्गिणामयनं नाम कश्चिद्यागविशेषः। तत्र मासपर्यन्तमनुष्ठाय, अनन्तरस्मिन् मासि प्रथमदिने कर्तव्यं ज्योतिराख्यं यागमुत्सृजेत् न वा इति संशयः। अत्र पूर्वपक्षमनुक्त्वा सिद्धान्तेनैवोपक्रमः कृतः—उत्सर्गः कर्तव्य एवेति। एवमेतरेषां वाक्यानामर्थोऽवगन्तव्यः।

नयनमुपलभामहे । इत्यादिना पूर्वोक्तार्थं विवृण्वानो वेदे मीमांसापूर्वकं निर्णयमभिव्यनक्ति ।

एवमैतरेयब्राह्मणेऽपि 'तिष्ठद्यूपा३ः अनुप्रहरे३त् इत्याहुः' इत्यादिविचार आरचितः। अत्र क्वचित् अङ्गपौष्कल्याभावेऽपि विचारस्वरूपे न भेद इति सर्वेषामेषां विचाराणां मीमांसारूपत्वमेव स्वीकार्यम् ।

एवमियं विचारशैली मीमांसापदवाच्या प्रथमं वेद एवाऽऽरब्धा तत्रैवापेक्षानुसारं सर्वां नेमिं तदीयां व्याप्नुवती प्रथमानाऽऽसीत् । ततः कालेन लौकिकेषु वचनेष्ववतरन्ती लौकिकशब्दसन्दृब्धे वेदार्थविचाररूपे शास्त्रे पदमादधाना तत्राऽपि तेनैव शब्देन व्यवह्रियमाणा समाद्रियते स्म । अर्वाचीनकाले बहुभिश्शास्त्रकारैः स्वग्रन्थे मीमांसाशब्दः प्रयुक्तः, यथा-अथातो भक्तिमीमांसा, अथातः श्राद्धमीमांसा इत्यादिः। तथा सर्वप्रथमतया वेद एवाऽयं मीमांसाशब्दो विचारे प्रयुक्तः । अनन्तरं तत उद्धृत्य स्वग्रन्थेष्वपि गौरवप्रदर्शनाय तत्तच्छास्त्रकारैर्निवेशित इत्येव प्रतीयते । किञ्च प्रायेण वेदादनतिदूरवर्तिविषयविचार एव मीमांसाशब्दः प्रयुज्यते । न सर्वत्र विचारमात्रे। नहि तार्किकः स्वीयशास्त्रीयविचारे मीमांसापदं प्रयुञ्जानो दृष्टः । न वा वैयाकरणोऽपि पदनिष्पत्त्यर्थं शास्त्राणि घटमानस्तत्रमीमांसापदं प्रयुंक्ते । इदानीं तु वङ्गदेशे सर्वत्र विचारमात्रे मीमांसापदं लौकिकैः प्रयुज्यमानं पश्यामो वयम् । परं पूज्यविचारे प्रथमतः प्रयुक्तं मीमांसापदं क्रमशो लोकेऽपि श्रद्धातिशयेनैवेदानीं प्रयुज्यत इत्येव प्रतीयते । किञ्च निरुपपदमिदं

मीमांसापदं कर्मकाण्डरूपवेदपूर्वभागविचार एव प्रयुज्यते । "मीमांसा" इत्युक्तौ पूर्वमीमांसैव स्मृतिपथमागच्छति, नोत्तरमीमांसा, न वा भक्तिमीमांसादिकम् । तासां तत्तद्विशेषणसमवधान एवोपस्थितेः । शास्त्रकारा अपि तथैव व्यवहरन्ति "मीमांसाख्या तु विद्येयं बहुविद्यान्तराश्रिता" इति "प्रायेणैव हि मीमांसा लोके लोकायती कृता" इति च वार्तिककारपादाः, "मीमांसाम्बुनिधिं प्रमथ्य" इति खण्डदेवो मीमांसाकौस्तुभे । "मीमांसासागरस्तेन क्रीड़ापुष्करिणी भवेत्" इति जैमिनीयन्यायमालायां माधवाचार्याः, "मीमांसां दीदांसारीत्या मत्या परिष्कुर्वे" इति मीमांसाकुतूहलवृत्तौ वासुदेवदीक्षिताश्च । उत्तरमीमांसायां तु सविशेषणमेव मीमांसापदं प्रयुज्यमानं दृश्यते । यथा—"तथा वयमस्यां शारीरकमीमांसायाम्" इत्याचार्यशङ्करभगवत्पादाः । 'भक्तिमीमांसा' इति शाण्डिल्यः । अतोऽपि कारणान्मीमांसायाः प्राशस्त्यमनल्पं प्रतीयते ।

## सर्वासु मीमांसासु पूर्वमीमांसैव प्राचीनतमा ।

न केवलमस्या मीमांसाया मीमांसान्तरापेक्षया प्राशस्त्यमुपलभ्यते, प्राचीनतमत्वमपि निर्विवादं प्रतीयते । तथाहि—मीमांसासु पूर्वोत्तरमीमांसे प्राधान्यमावहतो लोके । तत्रोत्तरमीमांसा विशेषेणाऽऽत्मतत्वमोक्षादिनिरूपणाय प्रवृत्ता । पूर्वमीमांसा तु कर्मकाण्डगतधर्मस्वरूपसाधनादिनिरूपणायोपयुज्यते । वेदे पूर्वं कर्मकाण्डः ततो ज्ञानकाण्डः । पूर्वं कर्मकलापानुष्ठानेन परिपक्वज्ञानस्यैव ज्ञानकाण्डेऽधिकारो भवितुमर्हति ।

कर्मकलापानुष्ठाय कर्मकलापज्ञानमावश्यकम् । तत्राऽवाधितनिष्कृष्टार्थज्ञानाय पूर्वमीमांसाऽऽवश्यकीति पूर्वमीमांसाया एव प्राथम्यमनायाससिद्धं भवति । अनन्तरं च कर्मपक्वकषायस्य ज्ञानोदयाय "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्त्तते" इति शास्त्रसिद्धान्तानुसारेणोपनिषद्रूपज्ञानकाण्डार्थविचारे करणीये तत्र निष्कृष्ठार्थज्ञानायोत्तरमीमांसाऽवश्यकीति पूर्वमीमांसानन्तरकालिकत्वमुत्तरमीमांसायाः स्वत एव सिध्यतीत्यनेनापि प्राचीनत्वं पूर्वमीमांसाया निराबाधम् । शास्त्रान्तरविषयिण्योऽन्यास्सर्वा अपि मीमांसा एतन्मूलिका एवेति नाऽत्र कस्यचिद्विवादस्याऽवकाशः । परं तासामेवंविधं सर्वाङ्गपौष्कल्यं, शृङ्खलारूपेण क्रमशो विषयानुबन्धः इत्यादिकं नातिविसुघटितम् । अतस्सर्वश्रेयसीयं पूर्वमीमांसा महर्षिणाऽप्यस्याः पवित्रतमत्वं श्रेष्ठतमत्वं च निशङ्कं मुक्तकण्ठमभ्युपगतम्—

"यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम् ।
तावुभौ पुण्यकर्माणौ पङ्क्तिपावनपावनौ"

इति वदता ।

"मीमांसाशास्त्रतेजोभिर्विशेषेणोज्वलीकृते ।
वेदार्थज्ञानरत्ने मे तृष्णाऽतीव विजृम्भते"

इति कुमारिलपादैरुक्तं श्लोकवार्तिके मीमांसाशास्त्रे निरतिशयं गौरवमावहद्भिः । परं आ च शङ्करभगवत्पादेभ्यः आ चाऽधुनिकाद्विद्वद्वरात् प्रायस्सर्वोऽपि शास्त्रकाराः पूर्वमीमांसारीत्या विचार्य निर्णयं प्रापित एवाऽर्थस्सुदृढं स्थातुमर्हतीति

निश्चिन्वानाः स्वस्वग्रन्थेषु येन केनापि प्रकारेण मीमांसासम्बन्धमानयन्ति। किं बहुना रसगङ्गाधरप्रभृतय आलङ्कारिकग्रन्था अपि स्वस्य पूर्वमीमांसासम्बन्धमभिवाञ्छन्ति स्वगौरवस्य परिरक्षणाय परिवर्द्धनाय वा, तथैव च ग्रन्थकर्तारोऽपि तां योजयित्वा यत्र कुत्राऽपि स्वग्रन्थे कृतार्थं मन्वन्ते। इदं च तत्तद्ग्रन्थपरिशीलिनां करबदरसमानमेवेति नात्राऽधिकमपेक्ष्यते लेखनीयम्। यदि चालङ्कारादिग्रन्थेष्वपि मीमांसान्यायसञ्चार आवश्यको मन्यते तैस्तैर्ग्रन्थकर्तृभिः, तदा किमत्र चित्रं यत् शास्त्रकाराः पदार्थवाक्यार्थनिर्णयाय मीमांसायास्समीपं सादरमनुधावन्तीति। श्रीमदाचार्यशङ्करभगवत्पादभाष्यं विवरीतुं प्रवृत्तैः प्राचीनैर्महर्षिकल्पैः सुरेश्वराचार्यतोटकाचार्यवाचस्पतिमिश्रप्रभृतिभिः विद्वद्धौरेयैः, तत्र साफल्यसम्पादनाय स्वग्रन्थाः प्रायः पूर्वमीमांसापदार्थैरेवाऽऽपूरिता इति को वा न जानाति विद्याव्यसनी ?

## पूर्वमीमांसैव सर्वव्यापिनी

इयमेव भगवती मीमांसा सर्वाण्यपि शास्त्राणि तदर्थनिर्णयाय व्याप्नोति। उत्तरमीमांसा यद्यपि स्वरूपेण नाऽतिक्रामति पूर्वमीमांसाम्। तद्वदेवेयमपि पञ्चावयवा। शैल्यपि तादृश्येवाऽत्रापि या पूर्वमीमांसायां बहुलमुपलभ्यते, परं न तस्या उत्तरमीमांसायाः तदीयन्यायानां वाऽन्यत्रशास्त्रेषु पश्यामः क्रियमाणमतिदेशम्। सा हि यन्निर्णयाय प्रवृत्ता, कृत्वा तन्निर्णयं निराबाधं, तत्रैवोपरमते। नाऽन्यत्र तन्न्यायः प्रसरम-

यते। यत उत्तरमीमांसान्यायमन्यत्र शास्त्रान्तरे विशेषतोऽतिदिश्यमानं न वयमवलोकयामः। पूर्वमीमांसान्यायास्तु न्यायशास्त्रे, व्याकरणे, साहित्यशास्त्रे, सांख्ययोगयोः, विशेषतो वेदान्ते ततोऽप्यधिकतरं धर्मशास्त्रग्रन्थेषु धर्मस्वरूपादिनिर्णयाय प्रवृत्तेषु व्यवहारशास्त्रे च सुतरामतिदिश्यन्ते तैस्तैः ग्रन्थकर्तृभिः प्राचीनैरर्वाचीनैश्चेत्यहो भगवत्या अस्यास्सर्वत्रसमानस्समादरः। श्रीमान् सरकारमहोदयोऽपि आधिकरणिकव्यवहारेषु पूर्वमीमांसाया महान्तमुपयोगमुपकारं च प्रदर्शितवान्। अतएवेदानींतना वावदूकाः (vakils) ये पूर्वमीमासाया निवेशनप्रकारं विवादे योजयितुं प्रभवन्ति तेऽधिकरणेषु जयं प्राप्नुवन्त्येवेति बहुशोऽनुभूतचरोऽयं विषयः ; ते हि मीमांसान्यायजालवागुरया परिपन्थिनमावेष्टयन्ति। तदावेष्टितः प्रतिवावदूकः तत्स्वरूपज्ञानाभावात् तत आत्मानमुन्मोचयितुमसमर्थइतस्ततो जालबद्धमूषिकवत् यावत् परिभ्रमति व्याकुलचित्तः तावत् प्राथमिकेन पराजीयते। उक्तमेतत् कुमारिलपादैरेव—

"मीमांसका हि वाक्यार्थविचारे प्रस्तुते सति।
लोकदृष्टीःप्रतिघ्नन्ति वचनव्यक्तिपांसुभिः" इति।

नैवमत्रविचारणीयम्——वाग्जालैः परबुद्धिविमोहनं, परमुखबन्धनं वा मीमासाध्ययनस्य फलमिति। यतो हि सर्वैरपि मीमांसाप्रवर्त्तकैरन्यैश्च तीर्थकारैः वस्तुतत्व-(वाक्यतत्वार्थ) निर्णयस्यैव विचारफलत्वाभ्युपगमस्य तत्र तत्र शास्त्रेषु निर्णीतत्वात्। अतस्सर्वथा वस्तुतत्वनिर्णय एव शास्त्रस्य महाफलम्।

पूर्वोक्तवचनं तु—मीमांसकेन वाक्यार्थनिर्णयाय समुपस्थापिताः न्यायाः नाऽमीमांसकेन यथावदधिगन्तुं शक्यन्ते। तदा प्रमादादिभिस्सुदुरमाकृष्येताऽपि प्रतिवादीवादिना। अतस्ततो निर्गमनाय पुरुषेण विशेषतो वावदूकेनाऽवश्यमध्येतव्या मीमांसा इत्येतत्परकमिति। अतः शास्त्रान्तरे गाढ़तरं प्रविविक्षुभिः, लौकिके व्यवहारे पाटवमभिलषद्भिः, व्यवहारशास्त्रे नैपुण्यं कांक्षद्भिः, न्यायेनाऽर्थनिर्णयमभिलषद्भिरवश्यमध्येया मीमांसेति।

## पूर्वमीमांसाध्ययनफलम्

इदानीमधीतवेदेन गुरुशुश्रूषया ज्ञाततदर्थेन गुरुगृह एवाऽवस्थाय यथावत् समधीतमीमांसाशास्त्रेण स्नातकेन लोके यावन्ति फलानि प्राप्तुं शक्यन्ते तान्यत्राऽनुक्रमिष्यामः।

प्रथमतस्तावत् वेदाध्ययनपूर्वकं समधिगतवेदाङ्गकलापेन येन परम्परागतविद्यावैशद्यात् श्रेष्टतमात् निष्कृष्टज्ञानवतो गुरोः सकाशादधीता मीमांसा स वैदिकेषु वचनेषु गहनातिगहनेष्वपि विगतभीरन्तरवगाढुं, अवगाह्य तमगाधमुदधिमालोड्याऽन्तर्गतं सारं बहिः प्रभवेदानेतुं, वितरीतुं च तदमृतं बुभुक्षितेभ्यः श्रोतृजनेभ्यः। किञ्च तत्रैव कुत्र विधिः? कुत्राऽर्थवादः? कुत्र स्वार्थपरता? कुत्र वा परार्थैकप्रयोजनता? कुत्र वास्तविको निषेधः? कुत्र वा निषेधवन्निगदः? इत्यादिकं सर्वमपि यथावदधीतमीमांस एव शक्नुयाद्विवेचयितुम्। यथा रत्नकाचमण्योस्समानेऽपि स्वरूपप्रकाशफालफल्यादौ

रत्नतत्वपरीक्षको झटित्येव यथा रत्नस्वरूपं यथावदवगच्छति एवं समानेऽपि विभक्तिप्रत्ययादौ स्तुतिनिन्दयोः, विध्यर्थवादयोः स्वार्थत्वपरार्थत्वयोः हेतुहेतुमन्निगदयोश्च स्वरूपं यथावन्मीमांसको विवेचयेत्। तादृशं च बुद्धिवैशद्यं स मीमांसाध्ययनेनैव भजते। पुनः पुनरभ्यस्तवेदमार्गपरिक्षुण्णा तस्य वाक् विषयेषु निरर्गला प्रसरति। निरावाधं मनश्चिन्तयति शास्त्रीयानेव विषयान्। तानेव चाऽर्थान् साधुनिर्णिनीषति ये मनागपि शास्त्रीयात् पथो न प्रच्यवन्ति। वैदिकस्य स्मार्तस्य वाऽर्थस्याऽन्यथाभवने कियान् दोषः इति भाष्यवार्तिकादिषु वहुधा प्रपञ्चितम्—"केचिदन्यं धर्ममाहुः केचिदन्यम्। तत्राऽविचार्यप्रवर्तमानः यं कंचिदुपाददानो निःश्रेयसात् विहन्येत अनर्थं चर्च्छेत्।"

"मीमांसायां त्विहाज्ञाने दुर्ज्ञाते वाऽविवेकतः।
न्यायमार्गे महान् दोष इति यत्नोपचार्यता"

इत्यादिना। दोषादस्मादात्मानमन्यांश्चाऽभिरक्षितुं मीमांसक एव समर्थः। मीमांसान्यायसञ्चारपूर्वकमेव वैदिकानां लौकिकानां वा वचसामर्थनिर्णयकर्तुरेव धर्मरहस्यवेत्तृत्वमनुजानाति मनुः—

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणाऽनुसन्धत्ते सधर्मं वेद नेतरः[1]"

इति। मीमांसक एवैकत्र निर्द्धारितं न्यायमन्यत्रापि

1. मनुसंहिता १२. १०६.

विषयान्तरेऽतिदेष्टुं तदनुरोधेन च तत्राऽर्थनिर्णयं कर्तुं प्रभवति । न्यायसञ्चारो यथाऽधीतमीमांसस्य सुलभः तथा तस्य अन्यत्राऽतिदेशोऽपि तस्यैव सुलभः । अतिदिष्टन्याया-वष्टम्भेन निर्णीतोऽर्थस्साधीयान् भवति । केनाऽपि प्रतिपक्षिणा-ऽनपनोदितश्च भवति । एवं न्यायानुप्रवेशपूर्वकं भाषमाणः पुरुषः भाषणकुशलः परिगण्यते विवेकिभिः । न्यायात् धर्म्याच्च पथो न कदाऽपि परिच्यवत्यस्य भाषणमिति श्लाघन्ते च जनाः । एवं विद्वद्गोष्ठीष्वपि धार्मिकीषु लौकिकीषु च सुतरां श्लाघ्यमानः परमं गौरवं भजते । तदुपजनितस्य यशसः परां कोटिमाटीकते । तेनैव च मीमांसान्यायसञ्चारेण मन्वादि-स्मृतीनां तत्तन्निबन्धग्रन्थानामप्यर्थं विवृण्वन्नयं सुधीवरः कस्य वा समनसो मनस्तोषाय न भवेत् ? न केवलं स्मार्त्तानां वैदिकानां च वचसाम् । व्यवहारैकमूलानां प्रत्यक्षमात्रनिबन्धनानामपि तेषां तथैव न्यायसञ्चारण-पूर्वकमेवार्थविवरणं कुर्वन् न्यायालये न्यायाधीशमन्यांश्च-प्रेक्षकान् विस्मये सन्तोषे निमज्जय्याऽऽत्मवशमानयेदिति किमत्र चित्रम् ?

एवं न्यायाभियोगपूर्वकं निर्णीतस्सुप्रतिष्ठितः परैरनिर्भेद्यो वेदार्थोऽन्यानिव तमपि सन्तोषयेत् वर्द्धयेच्च तं कुशलेन । यथावदधिगतधर्मतत्वोऽयं विपश्चिद्वरः पुण्यवशात् तत्रसमुपजात-श्रद्धो यदि कदाचित्ताननुतिष्टेत् तदा अस्पृष्टदोषलेशेन तदीयेन कर्मणा सन्तर्पिता देवताः परां तुष्टिमवाप्नुयुः । सन्तुष्टाश्च त एनमभिलषितफलेन वाढं संयोजयेयुः । यदि च

केनाप्यनिवार्येण प्रतिबन्धेन वाधितस्स्वयमनुष्ठातुं न प्रभवेदयम्, तदाऽपि परेषां न्यायानुगतधर्मानुष्ठानमात्रेणाऽपि परितुष्टास्ते एनं पण्डितप्रवरं समग्रेण यज्ञफलेन सम्बध्नीयुः । सर्वथाऽस्य धर्मफलप्राप्तिरविकलैव । देवताप्रसादोऽपि नान्तरीयक इति किमु वक्तव्यम् । "तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति" इति हि भगवती श्रुतिः ।

यदि च कश्चिन्मीमांसकमूर्द्धन्यः क्वचिद्भोजनाय, अन्यस्मै कार्याय वा कस्यांचिन्महत्यामल्पीयस्यां वा पङ्क्ता-वुपविष्टो भवेत्, तदा स समग्रां तां पंक्तिमात्मनः पवित्रतया पुनीयादीति मनुवचननिदेशपूर्वकं निरूपितं पूर्वम् ।

एवं धर्ममार्गपरिरक्षणेन, तद्द्वारा लोकसंरक्षणेन, देवता-सन्तर्पणेन, लोकसेतुदृढीकरणेन च कृताराधनो भगवान् सुसन्तुष्टोऽस्मै सुधीमणये कं कं वाऽभीप्सितं न पूरयेत् ? सर्वथा स कृतार्थ इत्यत्र कस्सन्देहः ?

———

## उपसंहारः

एवं च यो नाम (१) बुद्धिवैशद्यं (२) वाक्पाटवं (३) वैदिकलौकिकवाक्यार्थनिर्णयसामर्थ्यं (४) धर्मतत्त्वनिर्णयचणतां (५) अतिदेशनिपुणतां (६) व्यवहारकुशलतां (७) विधि-मन्त्रार्थवादादिविवेचनचातुरीं (८) वाक्यतात्पर्यनिर्णयपटुतां (९) ऊहापोहनैपुणीं (१०) धर्मशास्त्रमर्मज्ञतां (११) परमां च परिशुद्धिम् (१२) मानसं च समुल्लासं (१३) लोके पूजा-प्रतिष्ठादिलाभं (१४) विद्वद्गोष्ठीष्वपि प्रथमगणनीयतां (१५) लौकिकव्यवहारकुशलतां (१५) देवताप्रसादं (१७) मनसश्शान्तिं (१८) अन्ये च भगवतः परमेश्वरस्य परमनुग्रहं च य आत्मनेऽभिलषति सोऽवश्यमेनां मीमांसामधीयीत । यद्यपि कालेऽस्मिन् परिश्रमसाध्ये क्वचिदपि व्यापारे पदं निधातुमनीह-माना जनाः बहुविद्याश्रितायां, अतएव बह्वायाससाध्यायां, वैदिकालौकिकपदार्थभूयिष्ठायां पूर्वमीमासायामधीतिवुद्धिं नादधतीति क्रमेण ह्रासमानमुपेयुषीयं विशेषेण वङ्गदेशे तथा विधा परिदृश्यते, तथापि आस्मीकीनप्राचीनविद्या, धर्मतत्व-निर्णयपरिपाटिपरिरक्षणाय, सर्वविद्योपयोगिनी, सर्वश्रेष्ठतमा सर्वफलप्रदा, बुद्धिशक्तिविकासिनी भगवतीयं पूर्वमीमासा सर्वै-रपि समादरणीया, प्रापणीया च प्राचीनतमा परिस्थिति-मित्याशास्यते इति शिवम् ।

---

## Explanatory Notes

जैमिनीयन्यायमाला :—श्रीवुक्कभूपतेर्मन्त्रिपदमधिष्ठितेन पुरोधसा पराशरभाष्यादिप्रणेत्रा श्रीसायनाचार्य्यभ्रात्रा परमपण्डितेन श्रीमता माधवाचार्य्येण द्वादशाध्यायात्मकमीमांसादर्शनस्य सरलार्थरूपेण द्वादशाध्यायात्मकः श्लोकाकारः यद्-ग्रन्थो विरचितः स एव जैमिनीयन्यायमालानाम्नाऽभिधीयते ।

शालिकनाथ :—प्रभाकरकृतलघ्वीटीकायाः दीपशिखाख्य-व्याख्यायाः, तत्कृतवृहतीटीकाया ऋजुविमलाख्य-व्याख्यायास्तथा प्रकरणपञ्चिकानामकग्रन्थस्य रचयिता प्राभाकरः शालिकनाथः ६९० खृष्टाव्दात् ७६० खृष्टाव्दमध्येऽवतीर्ण इत्यनुमीयते ।

कुमारिलभट्ट :—मीमांसायाः मूर्त्तविग्रह इव कुमारिलभट्टः ६२० खृष्टाव्दात् ७०० खृष्टाव्दमध्येऽवतीर्णः। अस्य रचनासु मीमांसादर्शनस्य वृहट्टीका, तन्त्रटीका, श्लोकवार्त्तिकम्, तन्त्रवार्त्तिकम्, टुप्टीका उल्लेखयोग्याः, मण्डनमिश्रप्रभृतयः प्रसिद्धा मीमांसका एतस्य शिष्याः ।

पार्थसारथिमिश्र :—कुमारिलभट्टकृतश्लोकवार्त्तिकस्य न्यायरत्नाकर-नामकटीकायाः न्यायमालाग्रन्थस्य शास्त्रदीपिकाग्रन्थस्य च रचयिता भाट्टश्रीपार्थसारथिमिश्रः १०५० खृष्टाव्दात् ११२० खृष्टाव्दमध्ये आविर्भूतः ।

वासुदेवदीक्षित :—मीमांसासूत्रस्य अध्वरमीमांसाकुतूहलवृत्ति-नामकविस्तृतव्याख्याप्रणेता वासुदेवदीक्षितः १७०० खृष्टाव्दात् १७६० खृष्टाव्दमध्ये आविर्भूतः ।

रामानुजाचार्य्यं :—प्रभाकरमतानुयायितन्त्ररहस्यप्रणेता पार्थसारथिमिश्रकृतन्यायरत्नमालायाः नायकरत्ननामकटीकारचयिता रामानुजाचार्य्यः १७५० खृष्टाव्दमध्येऽवतीर्णः।

आत्मज्ञानम् :—प्रभाकरमते ज्ञानसामान्ये एव ज्ञानाश्रयरूपेणात्मा प्रतीयते। स चास्मदादिशब्दवाच्यः। इच्छादय आत्मगुणाः कर्म्मकर्त्तृविरोधापत्त्या आत्मनो मानसप्रत्यक्षं नाङ्गीक्रियते प्राभाकरैः। आत्मा जड़रूपः स्वयमप्रकाशासम्विच्च गुणः। भाट्टमते तु शरीरेन्द्रियादिभ्यः पृथक् प्रतिशरीरं भिन्नः। विभुपरिमितः, नित्यः, भोगस्वर्गापवर्गभागी चात्मा।

अवयवपञ्चकम् :—मीमांसाशास्त्रे 'विषयोऽविशयश्चैव पूर्व्वपक्षस्तथोत्तरम्। निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम' इति वाक्योक्तविषयसंशयपूर्व्वपक्षोत्तरपक्षसिद्धान्त रूपाणि पञ्चैवावयवानि, तत्र सिद्धान्तोपस्थापितं वाक्यं विषयवाक्यम्, द्विकोटिज्ञानविषयकवाक्यं संशयवाक्यम्, सिद्धान्तविरोधिवाक्यं पूर्व्वपक्षः, सिद्धान्तानुकूलयुक्तिः उत्तरपक्षः, चरमं सिद्धान्तवाक्यम्।

नित्यकर्म्म :—यत्करणे फलावश्यम्भावित्वं नास्ति, अकरणे तु प्रत्यवायस्तदेव नित्यकर्म्म। यथा 'अहरहः सन्ध्यामुपासीत' इत्यत्र फलं भवितुं न भवितुञ्चार्हति। किन्त्वस्या अननुष्ठाने पापमवश्यमेव भविष्यति।

नैमित्तिककर्म्म :—यथा 'पञ्चम्यां श्रियं पूजयेत्' इत्यत्र पञ्चमीतिथिनिमित्तमेव श्रीपूजनम्। अर्थात् यत्र तिथ्यादिकं

निमितीकृत्य विधिः कर्म्म विदधाति, तत्रैव तत् कर्म्म नैमित्तिकेन ज्ञेयम ।

धर्म्म :—भाट्टमते यागादिरूपो धर्म्मः । प्राभाकरमते तु सिद्धस्वरूपो धर्म्मः । तत्र जैमिनिसुत्रं 'चोदनालक्षणोऽर्थो धर्म्मः । एतत् सुत्रमूललक्षणं न्यायप्रकाशे 'वेदप्रतिपाद्य-प्रयोजनवदर्थो धर्म्म' इति ।

भाट्टा :—कुमारिलभट्टमतानुयायिन एव भाट्टशव्देनोच्यन्ते ।

प्राभाकरा :—गुर्व्वपरनामकप्रभाकरस्य सम्प्रदाया एव प्राभाकारशव्दवाच्या भवन्ति ।

शारीरकमीमांसा :—आत्मविचारशास्त्रम् अर्थात् वेदान्तशास्त्रमेव शारीरकमीमांसाप्रतिपाद्यम् ।

अर्थापत्ति :—अनुपपत्तिज्ञानजन्यं ज्ञानम्, उपपाद्यज्ञानेन वा अर्थापत्तिः । यथा 'पीनोऽयं दिवा न भुङ्क्ते' अत्र रात्रिभोजनज्ञानम् ।

अनुपलव्धि :— "ज्ञानकरणाजन्याभावानुभवासाधारणकारणम् अनुपलव्धिः' इति लक्षणम् । सा च उपलव्ध्यभावरूपा, प्रमाणसमुदायाभावरूपा वा । उदाहरणं यथा 'अत्र यदि घटः स्यात्तर्हि उपलभ्येतेति' ।

स्वर्ग :—मीमांसकमते स्वर्गस्वरूपं यथा—

"यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतञ्च ततसुखं स्वस्पदास्पदम ।।'

हेतुवन्निगदाधिकरणम :—'शूर्पेण जुहोति तेन ह्यन्नं क्रियते' इति श्रयते । अत्र अन्नकरणत्वरूपहेतुवशात्

शूर्पस्य होमकरणत्वमापातत प्रतीयते हि शव्दश्रवणात्। अस्यार्थस्य स्वीकृतौ अन्नकरणानां दर्व्वादीनामपि प्राप्त्या तैर्विकल्पप्रसङ्गः। अतएव अन्नकरणत्वं न हेतुः। तस्मादेव सादृश्यार्थकत्वत्प्रत्ययनिष्पन्ने हेतुवच्छव्दो हेतुसदृशार्थको भवति।

खण्डप्रलय :—अत्र खण्डप्रलयत्वं-जन्यद्रव्यानधिकरणकालत्वम्, महाप्रलयः किल जन्यभावनाधिकरणकालः।

ईश्वर :—मीमांसकमते मन्त्रमय ईश्वरः।

अग्निहोत्रम् :—यागविशेषः, तत्तुद्विविधम्, माससाध्यं यावज्जीवसाध्यञ्च। अग्नये होत्रं यत्रेति व्यधिकरणवहुव्रीहिना यागनामपरमिदम्, काणत्वादिदोषरहितानां सपत्नीकानामेव यागेऽस्मिन्नधिकारः, द्वितीयकल्पीययागकर्त्रा यावज्जीवमग्नित्रयं संरक्ष्य हवनं कार्यम् यागकर्तुर्मरणानन्तरमनेनैवाग्निना दाहो विहितः।

ज्योतिष्टोमम् :—षोड़शऋत्विक्साध्ययज्ञविशेषः।

ज्ञानप्रामाण्यस्य स्वतोग्राह्यत्वम् :—तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यत्वं स्वतोग्राह्यत्वम्। अत्र कुमारिलमते ज्ञानं ज्ञानानुव्यवसायश्च एकमेव। प्रभाकरमते तु ज्ञाततालिङ्गकानुमानेन ज्ञानप्रामाण्यग्रहः मुरारिमिश्रमते खलु अनुव्यवसायेन ज्ञानप्रामाण्यं गृह्यते।

अर्थवाद :—स्तुतिः। स तु त्रिविधः 'गुणवादः, अनुवादः, भूतार्थवादश्च'।

विरोधे गुणवादः स्यादनुवादोऽवधारिते।

'भूतार्थवादस्तद्धानावर्थवादस्त्रिधा मतः' इति भट्टः। तत्त्वसम्बोधिनीमते सप्तविधा। स्तुत्यर्थवादः, फलार्थवादः, सिद्धार्थवादः, निन्दार्थवादः, परकृतिः, पुराकल्पः, मन्त्रश्च।

मोक्ष :—मोक्षः हि आत्मज्ञानं विना न सम्भवति। 'विविधदुःखानामुच्छेद आत्यन्तिकविनाशः एव मुक्तिः' इति हि प्राभाकराः।

संस्कार :—येनात्मद्रव्यदेवतादिः, संस्क्रियते स संस्कार इति। स च द्विविधो भवति, ब्रह्मत्वाद्याधायकः, कर्मार्हत्वाद्याधायकश्चेति। यथा उपनयनादिक्रियायां ब्रह्मत्वाधायकत्वम्। 'व्रीहीन् प्रोक्षती'ति विहितप्रोक्षणादौ कर्मार्हत्वाधायकत्वं विद्यते।

विधि :—तत्तत्कार्य्यार्थप्रवृत्तो ब्राह्मणभागस्तेन तेन भेदेन विभक्तो विध्यर्थवादात्मना।

तत्र यानि वाक्यानि इदं कर्म एवं कर्त्तव्यम् इति कर्मस्वरूपमात्राववोधने प्रवृत्तानि तानि उत्पत्तिविधय इति उच्यन्ते। यानि तु वाक्यानि तत्तत्कर्मसम्बन्धिद्रव्यदेवतादिविधायकानि तानि गुणविधयो विनियोगविधय इति वोच्यन्ते। यानि च तत्तादृशेषु कर्मसु कस्याधिकारः किं फलमुद्दिश्य तत्कर्त्तव्यम्—इत्यादिकमववोधयति तानि अधिकारविधय इत्युच्यन्ते, एतेषामनुष्ठानक्रमादिकं योऽववोधयति स प्रयोगविधिरित्युच्यन्ते, एवं विधिभागश्चतुर्द्धा विभक्तो द्रष्टव्यः।

वाजपेय :—'वाजपेयेन स्वाराज्यकामो यजेत' इत्यत्र वाजपेयशब्देन गुणो विधीयते । अन्नवाची वाजशब्दः । तच्चान्नं पेयं सुराद्रव्यम् । स च वाजपेययज्ञः ब्राह्मण-क्षत्रियमात्रकर्त्तृको न वैश्याधिकारिकः । कालश्चास्य शरदृतुः । अस्य उभयतो वृहस्पतिसवोऽनुष्ठीयते । एवञ्च आश्विन्यां वाजपेयसुत्यानुष्ठानं तदुभयतः भाद्रपद्यां कार्त्तिक्यां च वृहस्पतिसवद्वयं कार्य्यम् । इत्येकपक्षः । वृहस्पतिसबस्थानेऽग्निष्टोमसंस्थो ज्योतिष्टोमो भवतीति द्वितीयः पक्षः । अथवा वाजपेयस्य द्वादशसु शुक्लपक्षेषु द्वादशानां यागानामनुष्ठानम् इति तृतीयः पक्षः ।

चातुर्मास्य :—चतुर्षु मासेषु अनुष्ठेयत्वात् चातुर्मास्यानीति संज्ञा कर्मणाम् । अत्र हि चत्वारि पर्व्वाणि,—वैश्वदेवम्, वरुणप्रघासाः, साकमेधाः, शुनासीरीयं चेति । तत्र प्रथमं पर्व फाल्गुन्यां पूर्णिमायामनुष्ठेयम् । ततश्चतुर्षु मासेषु गतेषु आषाढ्यां पूर्णिमायां द्वितीयं पर्व, इत्थं कार्त्तिक्यां तृतीयं पर्व, अथ च फाल्गुनशुक्लप्रतिपदि चतुर्थं पर्व अनुष्ठेयम् । एवं पुनः पुनरावर्तनीयम् ।

अत्र पर्वसु पौर्णमासीष्वनुष्ठेयत्वात् पर्वशब्देन ते यागा उच्यन्ते । इष्टिरूपेष्वत्र चत्वार एव ऋत्विजो भवन्ति । वरुणप्रघासेषु परं प्रतिपस्थाता एकोऽधिकः ।

# शुद्धिपत्रम्

| पृष्ठा | पङ्क्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| २ | ७ | ज्ञायते | प्रमीयते |
| २ | ११ | निश्चयात्मकं ज्ञानम् | निश्चयात्मकम् अव्यभिचारि ज्ञानम् |
| ४ | १ | विषयाववोधत्वमेव | विषयाववोधकत्वमेव |
| ५ | ४ | एकं तद् ज्ञानमित्यध्यवस्यन् | ज्ञानयोर्भेदमनध्यवस्यन् |
| ६ | १४ | रचयित्वा | योजयित्वा |
| ६ | २२ | प्रत्यक्षेण | प्रमाणेन |
| १६ | १९ | नहि | तर्हि |
| २३ | १५ | ध्वंसाप्रतियोगित्वमेव | अभावाप्रतियोगित्वमेव |
| २७ | १३ | स च नित्य | सचानित्य |
| २८ | २३ | तदनुरूपाणि | तदनुरूपम् |
| ३९ | ७ | प्रेरयति | नियोजयति |